॥ हरिदेवमिश्र-विरचिता ॥

# जहाँगीर-विरुदावली

सम्पादकः - डॉ॰ जगन्नाथ पाठकः



गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठम्, प्रयागः

हरिदेवमिश्र-विरचिता

# जहांगीर-विरुदावली

सम्पादक :

डा० जगन्नाथ पाठकः




गंगानाथ झा केन्द्रीय संस्कृत विद्यापीठम्, प्रयागः

१ ९ ७ ८

## FOREWORD

Making poetry a tool to earn royal favour and riches has perhaps much older a tradition than one would usually be inclined to believe. The Sanskrit poets do not feel shy of stressing the importance of poetry for the propagation of the glory of a king and Bilhaṇa goes even to the extent of saying that the state of the affair why of the two contemporary kings Rāma and Rāvaṇa, the former has become favourite of the people and the later is viewed with disrespect is due to the fact that Rāma had Vālmīki to sing his glory whereas Rāvaṇa had none to do it (*Vikramāṅkadevacarita* 1. 27). "The material benefits that a poet receives from a king are perishable whereas the poetry that a poet composes for a king keeps his fame alive for the ages to come".

Much of the ancient bardic poetry is certainly lost to us for ever. In the works of Classical Sanskrit Literature we find perpetual references to such poetry but no ancient anthologies of the bard-poets are really available except for some excellent verses praising the exploits of the kings of a particular dynasty found in the royal copper plate grants. The practice of the compositions of the poetical works—mostly in ornate regional languages-in praise of the patron Hindu kings becomes expecially widespread in the centuries following 1200 A. D., a period befittingly known as Vīra-Gāthā-Kāla in Hindi Literature.

We are happy to place in the hands of our readers

the present work which is a significant representative of this branch of literature. The work which has been given the title of *Jahāngīra-Virudāvalī* by Dr. J. Pathak seeks to eulogise the great Moghul emperor Jahangir (1606-1627 A. D.). It has been written by Pt. Harideva Mishra of Mithila who was a contemporary of the king. The work is composed mainly on the pattern of the *Virudāvalīs* written in the regional dialects of Northern India and has the same type of ornate yet vigorous language, long metres and sentences full of long drawn compounds. Though embedded in an age-old tradition, the present *Virudāvalī* is unique in possessing cadence and metres not found in Sanskrit. Its importance lies in its being one of the best representatives of its type and also because it is a *Virudāvalī* composed by a Sanskrit poet, who himself belonged to a royal family of Mithila, in the glory of a Moghul emperor.

As Dr. Pathak has stated in his introduction, a copy of this work other than the one he has used is not known to exist anywhere. Through the good offices of Dr. M. D. Pandey he has been able to procure the manuscript of this work from the collection of Pandit Premnath Tripathi of Mirzapur, one of whose forefathers copied this work in Delhi towards the middle of the 17th century. Dr. Pathak deserves our sincere thanks for making this extremely rare work available to us and we congratulate him for carrying out this task in the best possible manner to the entire satisfaction of the scholarly world.

Dr. G. C. Tripathi
*Principal*
G. N. Jha Kendriya Sanskrit Vidyapeetha
Allahabad-2

Allahabad
1st June, 1978

# भूमिका

**पाण्डुलिपिः**

हरिदेवमिश्रेण विरचिताया जहांगीरविरुदावल्याः पूर्णा द्विचत्वारिंशत्पत्रपरिमिता देवनागरीलिपिनिबद्धा मातृकाऽस्माभिरुत्तरप्रदेशे मिर्जापुरमण्डलान्तर्गते खटखरियानाम्नि ग्रामे समुपलब्धा । प्रत्येकं पत्रेषु षट् पङ्क्तयः, प्रत्येकञ्च पङ्क्तिषु प्राय ऊनचत्वारिंशत्संख्यापरिमितान्यक्षराणि सन्ति । एतदतिरिक्ताया विरुदावल्या अस्या मातृकायाः सूचना कुतश्चिदपि नाधिगता । आउफ्रैष्टमहाशयानां 'कैटलागस कैटलागरम्' नामा ग्रन्थो विरुदावल्या एतस्या विषये मौनमेव विभर्ति । स्व० काशीप्रसादजायसवालमहाशयेन प्रकाशितायां मिथिलादेशीयपाण्डुग्रन्थसूच्यां (भाग० द्वि०, पटना १९३३) अपि हरिदेवस्य विरुदावल्याश्चर्चा नोपलब्धा । एवमियं विरुदावली न केनाप्याधुनिकेन मैथिलविदुषा विदिताऽऽसीदित्यग्रे स्पष्टं भविष्यति ।

ग्रन्थान्ते लिपिकारेण लिपिकालो निर्दिष्टः । तदनुसारं हरिपुरे (दिल्ल्यां) मणिकण्ठस्य पुत्रेण १७१२ वैक्रमाब्दे तथा १५७७ शकाब्दे (तदनुसारं १६५५ ख्रीस्तीयाब्दे) विरुदावलिकेयं लिखिता—

युगशशाङ्कमुनीन्दुसमे (१७१२) शके
तुरगसप्तकलम्बकचन्द्रके (१५७७) ।
धवलपक्षकसंयुतभाद्रके ।
विधुजवारयुतो नवमीतिथौ ॥
त्रिदशलोकसदर्च्यगिरीन्द्रयी (यो ?)
श्चरणयुग्मसरोरुहषट्पदः ।
समलिखन्मणिकण्ठसुतः स्वयं
हरिपुरे विरुदावलिकां शुभाम् ॥

पाण्डुलिपिरियं प्रायः सुपठा, पत्राणि चाक्षतानि। किन्तु यत्र-तत्र कतिपयेष्वक्षरेषु पठने काठिन्यमनुभूतमस्माभिः। सामान्येन णकारस्थाने नकारं, खकारस्थाने षकारं लिपिकारः प्रयुङ्क्ते। शकारसकारयोरपि व्यवस्था नास्ति। 'च्छ' स्थाने 'छ' इति लिखति।

**लेखकः –**

ग्रन्थान्ते कविना स्वपरिचयो दत्तः शब्दैरेभिः –

"तादृक्सप्तसहोदरैकवलभीमूर्द्धन्यरत्नाङ्कुर–
श्रीभाजं चरणं महीपतिगुरोर्नत्वा मया गुम्फिते।
ग्रन्थेऽस्मिन्मुदमश्नुतात्कुमुदिनी माताऽथ मातामहः
श्रीमानच्युतठक्कुरो जनयिता सन्मिश्रविश्वेश्वरः॥"

तथा चेयं 'पुष्पिका' वर्तते– "इति श्रीहरिताम्रकुलकर्णपूरमैथिलमयूरनवनीरदश्रीजहांगीरकुलवन्दिष्यमानश्रीहरिदेवमिश्रविरचिता विरुदावली सम्पूर्णा॥"

हरिताम्र (हरियम्म) कुलसम्भवस्यास्य मैथिलस्य हरिदेवमिश्रस्यान्ये षट्संख्यापरिमिता भ्रातरः, भ्रातृषु श्रेष्ठो महीपतिनामा गुरुः, कुमुदिनीनाम्नी माता, अच्युतठक्कुरो मातामहः, विश्वेश्वरमिश्रः पिता, इत्यासन्। अनेन, कर्णकुतूहलाख्यस्य काव्यस्य शृङ्गारमञ्जरीनाम्नो ग्रन्थस्य[1] च कर्ता हरिदेवमिश्रः प्रस्तुतात् हरिदेवमिश्राद् भिन्न एवेति निश्चितम्। भिन्नस्य हरिदेवमिश्रस्य विषये पी० के० गोडेमहाशयस्य लेखोऽपि द्रष्टुं शक्यते[2]।

विरुदावलीकारेण हरिदेवमिश्रेण स्वमातामहरूपेण निर्दिष्टः श्रीमानच्युतठक्कुरो मिथिलायाः शासकस्य महेशठक्कुरस्य (१५५६ खीस्तीयाब्दतो राज्यारम्भः) पुत्र आसीत्। अच्युतठक्कुरस्यान्ये त्रयो भ्रातर आसन् – गोपालठक्कुरः, परमानन्दठक्कुरः (१५८० खीस्तीयाब्दानन्तरं राज्यप्राप्तिः) वैमात्रेयः शुभङ्करठक्कुरश्चेति (१५७१ खी०–१६२० खी०)।

---

१. गङ्गा ओरियंटल सिरीज, बीकानेरतः १९४३ खीस्तीयाब्दे प्रकाशितस्य।

२. "स्टडीज इन इण्डियन लिटरेरी हिस्ट्री"॥ पृ० २११.

हरिदेवस्य जननी कुमुदिनी पितुरेकमात्रमपत्यमासीत्। अस्य हरिताम्रनामा वंश इति, मंगरौनामूलको वत्सगोत्रीयश्चायमिति च मैथिलपञ्जीप्रबन्धाद् विदितं भवति।

यद्यपि हरिदेवस्य स्थितिकालः प्रामाणिकतया क्वचन निर्दिष्टो नास्ति तथापि तत्पित्रा विश्वेश्वरमिश्रेण वैयाकरणेन भवनाथझाविरचितस्य 'प्रयोगपल्लव'– नाम्नो ग्रन्थस्य स्वकीये 'पल्लवदीपनाम्नि' व्याख्याने लिखितम्— ल० सं० ४३६ भाद्रवदित्रयोदश्यां बुधे दीपग्रामे श्रीहरिदेवार्थं लिखितमिदं विश्वेश्वरेणेति[1]। अतो लक्ष्मणसेन सं० ४३६, तदनुसारं १५४५ ख्रीस्तीयाब्दसमयः सिद्ध्यति, एवं हरिदेवमिश्रस्य स्थितिकालः १५३५–१६४० ख्री० इति निर्धारयितुं शक्यते।

**लेखकस्यानुजो रघुदेवः—**

अस्यैवानुजेन रघुदेवमिश्रेणान्यैका विरुदावली लिखिता, यस्याः सङ्केत आउफ्रैष्टमहाशयानां ग्रन्थे, के० पी० जायसवालमहाशयानां पूर्वनिर्दिष्टग्रन्थसूच्याञ्चोपलभ्यते। विरुदावलीयं १९६० वैक्रमाब्दे काशीतो मैथिलझोपाख्यपण्डितश्रीचक्रधरशर्मविरचित–'विबुधराजिरञ्जिनी' विवृत्या सह प्रकाशिताऽऽसीत्।

अस्यामेव विरुदावल्यां कृष्णदत्ताख्येन मैथिलेन विदुषा या व्याख्या लिखिता, तामेव प्रायः प्रकाशितेयं व्याख्याऽनुसरतीति द्वयोराकलनेन प्रतीतमस्माभिः। कृष्णदत्तीयाया व्याख्याया एका मातृका प्रयागस्थहिन्दीसाहित्यसम्मेलनस्य सङ्ग्रहालये वर्तते। मूलविरुदावल्यपि तत्रैवास्ति (९२९।१४९१)। व्याख्याकारः कृष्णदत्तो जानराजचम्पू–कुवलयाश्वीयकारात् कृष्णदत्ताद् भिन्नः अभिन्नो वेति जायसवालमहोदयेनापि संशयः प्रकटीकृतः[2]। कृष्णदत्तेन व्याख्यारम्भे लिखितम् —

---

१. प्रयोगपल्लवव्याख्या, कामेश्वरसिंहदरभंगासंस्कृतविश्वविद्यालये विद्यमानाया मातृकाया आधारेण।

२. ए डिस्क्रिप्टिव् कैटलाग आफ मैन्युस्क्रिप्ट्स् इन् मिथिला, भा०२

प्रणम्य विश्वेश्वरमन्नपूर्णां ढुण्ढिं हरिं भैरवदण्डपाणी ।
काश्यामहं श्रीरघुदेवमिश्रसूक्तैः पदानि प्रकटीकरोमि ॥
अस्मत्प्रणीतेन पथाऽमुनेह सुदुःप्रवेशे विरुदप्रवन्धे ।
अन्तःप्रविश्याकलयन्तु सन्तः सरस्वतीकोष इवार्थजातम् ॥

भूमिकायां श्रीचक्रधरशर्मणा सूचितम्——

"ख्रिस्तीयसप्तदशशतके १७०० भारतधरां प्रशासतः पण्डितपतिजगन्नाथादिभूरिसूरिसनाथितसमितेः साहजहाँनामनरपतेः समये क्षितौ स्थितिं समुद्वहन् महामहोपाध्यायस्य मिथिलाशुभोपाध्यायस्य श्रीमन्महेशठक्कुरस्यात्मजन्मनश्च्युतदोषस्यास्य अच्युतठक्कुरस्य पुमपत्यविरहेण दौहित्रोऽयं कविस्तदंशभूतं राज्यं राज्यांशं लिप्सुर्नृपतियशोविकाशाकृष्टमानसो निजाभिजनान्मिथिलाविषयात् साम्राज्यलक्ष्मीनिकेतनं दिल्लीपत्तनं प्रातिष्ठत । तत्र चापरिचितपूर्वां नृपसभां सद्यो गन्तुमप्रतिपद्यमानमानसः पुरोपशल्यपरिशीलनकुशलस्रोतसः कलिन्दकन्यायाः कूले कस्यापि विशालस्य चलदलद्रुमस्य मूलमन्तेवासिपरिवृतोऽयमध्यास्त । तत्र च कृतनिवासेनामुना चलपत्रपत्रेषु विलिख्य विलिख्य श्लोकखण्डाः कूलोपकण्ठेषु प्राक्षिप्यन्त । कदाचित् क्रीडामज्जनोपनतेन भूपतिना च दैवात् परिभ्रमत्परिवारानीतानि प्रौढानि पिप्पलदलविन्यस्तानि कानिचित् पद्यखण्डानि विलोक्य कवितासौष्ठवचित्रितचेतसा प्रचेतसेव तत्प्रणेतुरन्वेषणायाहूता दूता व्यसृज्यन्त । तैः सवहुमानं समितौ प्रवेशिते च रघुदेवकवौ सामात्यवर्गोऽवनिपतिर्यथार्थमर्हणामस्य विधायावसरानुरूपं स्पृहणीयतमं सरस्वतीत्युपाधिं वितीर्य सभामण्डलाधिपतेर्जगन्नाथपण्डितस्य सविधे तं न्यवेशयत् । नृपाज्ञया च कविरयं विरुदावलीमिमामद्भुतरचनां लक्षणानुगतां प्रणीय सम्राजे समर्प्य तेन सम्मानितः स्वाभिजनं प्रत्यागतो देशाधीश्वरैः सामयिककवीश्वरैश्च सत्कृतश्चिरं सनाथयामास मेदिनीम् ।"

अस्याख्यानकस्याधारभूता मैथिलविपश्चितां समाजे प्रवर्तमाना किंवदन्त्येव । परमनेन श्रीचक्रधरशर्ममहाशयेन रघुदेवाग्रजस्य हरिदेवस्य विषये न किञ्चिन्निर्दिष्टम् । हरिदेवप्रणीताऽप्येका विरुदावल्यासीदिति मैथिलविदुषां समाजे केनचिदप्युल्लेखो न विहितः । परममिदमाश्चर्यं यत् स्वकीयविरुदावल्यां रघुदेवः कस्मिंश्चिदपि स्थले स्वकीयस्य स्तूयमानस्य नरपतेर्नामोल्लेखमपि न कृतवानिति । सम्राट् शाहजहान एव तदीयो वर्णन-विषय इति निर्दिष्टकिंवदन्तीमतिरिच्य नास्ति द्रढीयः प्रमाणम् । नास्त्येकमपि विशेषणं येन स्तूयमानो नृपतिविशेषोऽनुमीयेत । किन्तु हरिदेवस्य विरुदावल्या ईदृशी नास्ति स्थितिः । अत्र तावत् स्तूयमानस्य श्रीजहांगीरस्यादौ मध्येऽन्ते च नामोल्लेखो विहितः । हरिदेवेनेव रघुदेवेनापि स्वकीयरचनायां पद्यद्वयेन स्वजनकादीनां परिचयो दत्तः —

"श्रीविश्वेश्वरमिश्रतः कुमुदिनी देवी कुमारं कुला-
लङ्कारं समवाप यं गणपतिं गौरी गिरीशादिव ।
दौहित्रोऽच्युतठक्कुरस्य कृतिनः श्रीहारिताम्रान्वयः
श्रेष्ठोऽसौ रघुदेववालककविर्वैदेहभूमण्डनः ॥
विद्याहृद्यमुखं महीपतिमथ श्रीबुद्धिनाथं ततो
लक्ष्मीदेवकुलाधिदेवमहितं श्रीमोहनं मोहनम् ।
नत्वा श्रीहरिदेवदेवजनुषं ज्येष्ठं वयोभिर्गुणैः
कृत्वेमां विरुदावलीमिह सदानन्देऽनुजे न्यस्तवान् ॥"

म० म० कृष्णसिंहठक्कुरेण स्वकीये खण्डवलाकुलदीपिकानाम्नि ग्रन्थे दिल्लीपतेः सभायां सहोदरयोर्हरिदेवरघुदेवशर्मणोर्गमनं सूचितम्—

"दौहित्रतामथ गतो हर(रि?)देवशर्मा
तस्यानुजो बुधवरो रघुदेवशर्मा ।
दिल्लीपतेर्नरमणेरथ पातिसाहात्
राज्यं विभाज्य मिथिलात्म तृतीयभागम् ॥ ६६ ॥
आनिन्यतुस्तदवबोधिदलञ्च ताम्रं
यत्प्रातिरूपकमिहौकसि मे दलञ्च ।
सद्धारिताम्रकुलजाविह सोदरौ च
विद्याविनोदरसिकौ शुभकर्मदक्षौ ॥ ६७ ॥"

मिथिलायाः पञ्जीप्रवन्धानुसारं दिल्लीपतिना हरिदेवः 'अविलम्व-सरस्वती'ति रघुदेवश्च 'बुद्धिसरस्वती'त्युपाधिना विभूषित इति सूचितोऽस्मि। म० म० परमेश्वरझामहोदयेन स्वकीये 'मिथिलातत्त्वविमर्श'[1]नाम्नि मैथिल्यां लिखिते ग्रन्थे रघुदेवमिश्रविषये किञ्चिदधिकं निर्दिष्टम्--

"रघुदेवमिश्रः प्रौढो नैयायिकस्त्वासीदेव, परं वाल्यावस्थातः कविताया अत्यन्तं रचयिता श्रुतिधरश्चासीत्। वृद्धपरम्परया श्रूयते यत् रघुदेवमिश्रो राज्ये मातामहस्यांशप्राप्त्यर्थं विरुदावलीनामकं ग्रन्थं विरचय्य दिल्लीं जगाम। शहाबुद्दीनमुहम्मद-शाह (शाहजहां) पातसाहः (तदीयं काव्यं) श्रुत्वा भृशं प्रसन्नो जातः। 'सरस्वतीत्युपाधिना' च तेन स विभूषितः सञ्जातः। खड़ोरयकुले राज्यं न विभज्यते तथा दौहित्राय भागो न दीयत इति कृत्वा तस्मै राज्यांशो न प्रदत्तः, किन्तु तं वस्त्रालङ्काररत्नादिभिरलङ्कृत्य प्रेषितवान्। नशिरादेशे (पुड़ैनिया वा पूर्णिया-मण्डले) जीविकार्थं भूमिरुपलव्धा। दिल्लीत आगत्य (रघुदेवः) नशिरान्तर्गते यज्ञपल्ली (जगैली) ग्रामे न्यवसत्। मम पूर्वपुरुषो महामहोपाध्यायः परशुरामझास्तस्य च्छात्र आसीत्। तस्यैवाज्ञया उक्ते ग्रामे वाचस्पतिमिश्रकृतशुद्धिचिन्तामणि–व्यवहारचिन्तामणि–द्वैतनिर्णयग्रन्थास्तेन लिखिताः, ये मम सङ्ग्रहेऽद्यावधि, सन्ति। व्यवहारचिन्तामणेः समाप्तिलेखोऽस्ति यथा -'यज्ञपल्ली-ग्रामे महामहोपाध्यायरघुदेवसरस्वतीनामाज्ञया श्रीपर्शुरामशर्मणा लिखितमिदं पुस्तकम्।' इमे सर्वे शाके १५३७ अर्थात् १६१५ ख्रीस्तीयाब्दे आसन्॥"

'शाहजहांनामा' (भा० प्र०) नाम्नि पारसीकभाषायां लिखिते ग्रन्थे स्पष्टमेव 'तिरहुत'स्य द्वयोर्विलक्षणकव्योः शाहजिहानस्य सभायां गमनं समुल्लिखितमस्ति। तत्प्रकरणञ्च श्रीफसीउद्दीन वलखीमहाशयेन स्वकीये 'तारीखियेमगध' नाम्नि ग्रन्थे (पृ०२४६) अनुवदता लिखितम्--

"१०३८ हिजरी में (१६३८ ई०) यमीनुद्दौला आशिफ् खां ने शाह-जहां के दरवार में तिरहुत के रहने वाले दो अजीव वरहमनों को पेश किया जो वादशाह की हुनरपरवरी का शुहरा सुनकर अपने वतन से आये थे।

१—मैथिली अकादमी, पटना १६७७

इनमें कमाल यह था—"हिन्दी शुअरा के दस मुख्तलिफ शेर जो पहले कभी न सुने हों सिर्फ एक बार सुनने से इनको अजबर हो जाते थे और ये उन्हीं अशआर को अपनी जुबान से दुहरा कर इनके वजन और काफिये मतालिब के जवाब दस अशआर फिलवदीह कह कर पढ़ते थे। बादशाह ने मुकर्रर इनका इन्तहान लिया और आजमाइश में पूरे उतरने पर इनको हजार-हजार रुपये इनआम और खिलअत देकर रुखसत किया।"

अनेनोद्धरणेन कतिपये पूर्वसूचिता विषयाः प्रमाणिताः सङ्गताश्च सञ्जायन्ते। तथाहि १६३८ ख्रीस्तीयाब्दे द्वयोः सहोदरयोः श्रीसाहजिहानस्य सभायां गमनं श्रुतिधरत्वञ्चात्र स्पष्टतयोल्लिखितम्। श्रीसाहजिहानात् सहस्रपरिमितद्रव्यरूपस्य पुरस्कारस्य तथा सम्मानोपाधेश्च लाभोऽप्यत्र निर्दिष्टः।

'A Des. Cat. of Mss in मिथिला' (VoL. II) इत्यस्मिन् ग्रन्थे कें० पी० जायसवालमहाशयेन रघुदेवमिश्रस्य ग्रामो 'जमथरि' (मधुवनी-मण्डले झंझारपुरतः पश्चिमायां दिशि क्रोशद्वयं यावत्) इति निर्दिष्टम्, परं कामेश्वरसिंहदरभंगासंस्कृतविश्वविद्यालयस्य शोधच्छात्रः श्रीशशिनाथ-शर्मा 'दीप'ग्रामवास्तव्यमेव तं स्वीकरोति (अयमपि ग्रामो झंझारपुराद-दूरवर्त्येव)। अनेनैव महाशयेन हरिदेवमिश्रस्य वंशवृक्षो मत्सविधे प्रेषितः, स चाविकलमत्र प्रस्तूयते—



अत्र हरिदेवादन्ये चत्वार एव भ्रातरो निर्दिष्टाः सन्ति । म० म० परमेश्वरझामहोदयेन 'मिथिलातत्त्वविमर्शे' विश्वेश्वरमिश्रस्य षट् पुत्रा निर्दिष्टाः- महीपतिः, बुद्धिनाथः, मोहनः, अविलम्बसरस्वतीपदाङ्कितो हरिदेवः, रघुदेवः, सदानन्दश्च । श्रीशशिनाथशर्मणा निर्दिष्टे वंश-वृक्षे बुद्धिनाथस्य मोहनस्य चोल्लेखो नास्ति । स्वयञ्च हरिदेवेन स्वगुरोर्ज्येष्ठस्य महीपतेश्चरणस्य विशेषणं ददता लिखितम्- 'तादृक्सप्तसहोदरैकबल-भीमूर्द्धन्यरत्नाङ्कुरश्रीभाजं चरणं महीपतिगुरोरिति । '..........मही-पतिमथ श्रीबुद्धिनाथं ततो लक्ष्मीदेवकुलाधिदेवमहितं मोहनं नत्वा श्रीहरिदेवदेवजनुषं.........सदानन्देऽनुजे न्यस्तवान् ।' इति रघुदेवीयपद्यां-शेन च सहोदराणां संख्या सप्तेति सिध्यति । भ्रातृणां संख्याविषये कदाचित् श्रीपरमेश्वरझामहोदयानां श्रीशशिनाथशर्मणश्च भ्रमः समजायतेति शङ्कामहे ।

**प्रस्तुतो ग्रन्थः –**

विरुदावलीयं यस्य स्तुतिरूपेणोपनिबद्धा स जहांगीरेति नाम्ना प्रसिद्धो मुगलसम्राडकबरतनूजन्मा मुहम्मदसुलतानसलीमः १५६९ खी-स्तीयाब्दे जन्म लेभे । पितरि च दिवङ्गते १६०६ खीस्तीयाब्दात् १६२७ खीस्तीयाब्दं यावत् स भारतभुवं प्रशशास । विरुदावलीकारेण श्रीहरिदेव-मिश्रेण जहांगीरसमसामयिकेन सताऽपि वर्ण्यनृपतेर्जीवनस्य मार्मिकाः प्रसङ्गा न सङ्केतिताः, इति हेतोः काव्यस्यास्य किञ्चिदैतिहासिकत्वमुन्मी-लितं न भवति । केवलं शौर्यादिगानमेवास्य मुख्यो विषयः । अन्यैरपि रघु-देवप्रभृतिभिर्विरुदावलीकारैरेवमेव कृतम् । यद्यपि यत्रकुत्रचित् कलिङ्ग-कार्णाटादिविविधजनपदानामुल्लेखः कालप्यागरादिस्थानविशेषनिर्देश-श्चोपलभ्यते, किन्तु तेनास्यैतिहासिकः पक्षः कश्चन नैव परिस्फुरतीति प्रतिपत्तव्यम् । अत्रागरानगर्यपि वैशद्येन वर्णिता । तदानीमागरायाः प्रतिष्ठा सर्वतोऽधिकेत्यैतिहासिकैः स्वीक्रियते ।

मूलमातृकायां काव्यस्यास्याभिधानं विरुदावलीति विरुदावलिकेति वर्तते विरुदावलीयं जहांगीरस्येति कृत्वाऽस्माभिर्जहांगीरविरुदावलीत्य-भिधानमङ्गीकृतम् । यद्यप्येकत्र (७४) साहजिहानोऽपि सम्बोधितः, किन्तु सामग्र्येण जहाँगीर एवास्य वर्ण्यः ।

'साहित्यदर्पणे' विरुदावलीति प्रसिद्धा काव्यविधा 'विरुद'मित्युक्ता—
"गद्यपद्यमयी राजस्तुतिर्विरुदमुच्यते ।"

परमियं काव्यविधा सर्वथाऽर्वाचीनैवेति वक्तुं शक्यते। यद्यप्यनेकैर्बाणभट्टादिभिः कविशिरोमणिभिः स्वाश्रयदातुर्हर्षवर्धनादेर्नृपतेः प्रशस्तौ काव्यनिर्माणं विहितम्, तथापि कलिकाविरुदाद्यलङ्कृतः काव्यबन्धः कश्चन प्राचीनतरो नोपलभ्यते, न च वा श्रूयते ।

नास्त्यत्र संशीतिलवो यत्कविभिः 'काव्यमर्थकृते' इति सिद्धान्तमनुसरद्भिरेव राजस्तुतिरूपमीदृशं काव्यं निरमायीति। राजप्रशस्तिरूपकाव्यानां बाहुल्येन व्यथितहृदया भक्तशिरोमणयो गोस्वामितुलसीदासवर्या 'रामचरितमानसे' चतुष्पादिकाम् ('चौपाई' इति) इमामलिखन्—

"कीन्हें प्राकृत जन गुण गाना ।
सिर धुनि गिरा लगत पछिताना ।।" (बाल० ११/७)

अन्यत्र विरुदावल्या लक्षणमिदमुपलभ्यते—
"वर्ण्यनामाङ्कविरुदवर्णनप्रचुरोज्ज्वला ।
वाक्याडम्बरसंयुक्ता कथिता विरुदावली ।।"

कविनैव तावदियं 'त्रिशत्त्रिके'त्यभिहिता अर्थात् अस्यां 'कलिकर्णकलिका' 'शोभनश्लोकाः' 'वीरविरुदम्' इति त्रिकस्य त्रिशद्वारं प्रयोगः कृतः। स्वयमेव कविना विषयोऽयं स्पष्टीकृतः (१३६)।

विरुदावलीयं श्री'सुरत्राण'स्य[1] पातिसाहवरवीरस्य प्रबोधनाय केनचित् कुमारभागधेन पल्लविता वर्तते। कविना मङ्गलपद्यानन्तरं गद्ये व्यतिरेकालङ्कारप्रयोगपुरःसरं श्रीसुरत्राणं इन्द्रादेरपि विशिष्टं प्रस्तुवता प्रातःकाले नानादिग्देशागतानां सामन्तानां प्रतीहारदेशे समुपस्थितिर्वर्णिता ।

रघुवंशमहाकाव्यस्य पञ्चमे सर्गे महाकविना कालिदासेनापि 'सूतात्मजाः सवयसः प्रथितप्रबोधं प्राबोधयन्नुषसि वाग्भिरुदारवाच' इति निर्दिशता 'रात्रिर्गता मतिमतां वर०' इत्यारभ्य 'अनुवदति शुकस्ते मञ्जुवाक् पञ्जरस्थः' इति यावत् नृपतिरघुप्रबोधनाय पद्यानि लिखितानि। देवालयेषु देवप्रबोधनाय परिपाटीयमद्यत्वेपि 'सुप्रभातरूपा' दृश्यते। किन्तु कालक्रमेण स्वाश्रयदातुः प्रबोधनमात्रमुद्दिश्य विरुदावलीनिर्माणं प्रवृत्तम् ।

१. कविना जहांगीरस्य नामांशं 'सुलतान' इति पदं संस्कृत्य 'सुरत्राण' इति लिखितम् ।

प्रस्तुतविरुदावल्या एवंविधा प्रस्तावना सर्वथा प्रभावोत्पादिनीत्यत्र नास्ति सन्देहः। रघुदेवेन तु नैतादृश उपक्रमो विहितः।

मिथिलायामन्या अपि विरुदावल्यो विनिर्मिताः, यथा चन्द्रदत्तझा-निर्मिता विरुदावली (मिथिलापाण्डुग्रन्थसूची सं० १४६), सुन्दरविरुदावली (अज्ञातकर्तृकाऽपूर्णा) राघवविरुदावली, चित्रकविविरचिता माधवविरुदावली च। अन्त्यास्तिस्रः श्रीरमेश्वरसिंहमहोदयानां शासनकाले श्रीसहदेवशर्मणा प्राकाश्यमानीताः।

वर्णनीयस्य नृपतेः क्वचन रूपस्य, क्वचन शौर्यस्य क्वचिच्च धैर्यादिगुणानामातिशय्येन कथनं कवेरभिप्रेतम्। एकत्र कृपाणिकाया वर्णनेन, अन्यत्र बाहोः सर्पराजत्वप्रतिपादनेन, अपरत्र कीर्तिपूरस्याशासु प्रसरणेन रिपूणां मशकत्वकल्पनेन वनेषु भयपलायितानां रिपुस्त्रीणां दुर्दशाप्रकाशनेन कविर्वर्ण्यनृपतेर्गुणाख्याने वागाडम्बरं प्रस्तुतवान्। आमूलचूलं वर्णनेष्वनुप्रासजन्यश्चमत्कारः सुतरामनुभवितुं शक्यते। अर्थालङ्कारेषूत्प्रेक्षाया रूपकस्य व्यतिरेकस्य च प्राधान्यं परिस्फुरति।

यदि नाम हरिदेवरघुदेवयोर्विरुदावलीद्वयस्य तुलनात्मकमाकलनं प्रस्तूयेत तदा कवित्वे कतरो विशिष्ट इति सामग्र्येण स्फुटं स्यात्।

विरुदावल्यां विविधानां छन्दसां प्रयोगोऽपि विचारणीयः। स्रग्धरा-शार्दूलविक्रीडित-पृथ्वी-भुजङ्गप्रयात-प्रभृतीनि सुपरिचितानि छन्दांसि त्वत्र विराजन्त एव, मत्ताक्रीड-गीतिका-पद्मावती-सोमराजी-मत्तमयूरान्दीन्यपि यत्र तत्रोपलभ्यन्ते। दोहा-कुण्डलियाप्रभृतीन्यपि वर्तन्ते। एवमन्यान्यपि छन्दांसि छन्दःशास्त्रपद्धत्यवगाहनकुशलैराकलयितुं शक्यन्ते।

मुगलकाले संस्कृतस्य कतिपये विद्वांसः कवयश्च प्रतिष्ठिता अभूवन्। अकबरस्य राज्ये 'अकबरीयकालिदासे'ति नाम्ना प्रथितस्य गोविन्दभट्टस्य नामाद्यत्वेऽपि स्मर्यते। सुप्रसिद्धा कादम्बर्याष्टीका तदानीमेव भानुचन्द्रसिद्धिचन्द्राभ्यां लिखिता। एवमेव जहांगीरशाहजिहानयोरपि राज्ये प्रतिष्ठामभजन्त विद्वांसः कवयश्च। जे० बी० चौधरीमहाशयैर्लिखितः "Muslim Patronagc in Sanskrit Learnirg (प्राच्यवाणी, कलकत्ता) ग्रन्थो विषयेऽस्मिन् परिशीलनीयः। प्रसङ्गेऽस्मिन् 'दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः' इति 'दिल्लीश्वरो वा जगदीश्वरो वे'ति चाभिधायिनो रसगङ्गाधरकर्तुः पण्डितराजस्य को न स्मरेत्।

रुद्रनाम्ना दाक्षिणात्येन कविना 'जहांगीरशाहचरिता'ख्यमुल्लासेषु विभक्तमेकं गद्यकाव्यं नारायणशाहतनूजन्मनः प्रतापशाहस्यादेशेन निर्मितमासीत्। किन्तु रचनाया अस्या अद्ययावत् कानिचिद् विकीर्णानि पत्राण्येव नासिके उपलब्धानि[1]। रुद्रकविनैव 'राष्ट्रौढवंशमहाकाव्यं' १५९६ खीस्तीयाब्दे व्यरचि।

हिन्दीसाहित्यस्य प्रसिद्धेन कविना केशवदासेन 'जहांगीर-जसचन्द्रिका' लिखिता। सा च पं० विश्वनाथप्रसादमिश्रेण सम्पाद्य 'केशवग्रन्थावल्यां' हिन्दुस्तानी अकादमीप्रयागतः प्राकाश्यमानीता। यथा प्रस्तुतविरुदावल्या आरम्भ एव सुबहूनां देशानां नामोल्लेखो वर्तते तथा अत्रापि वर्तत इति विचित्रं सामञ्जस्यम्। अत्र स एव प्रसङ्गो विदुषामाकलनायाविकलमुद्ध्रियते—

गौर गुजरात गया गोड़वाने गोपाचल
गंधार गख्खर गूढ गायक गनेस के।
अरब ऐराक आबू आसेर अवध अंग,
आसापुरी आदि गांव अर्गल सुबेस के।
संभल सिंघल सिंधु सोरठ सौवीर सूर
खंधार खुरेस खुरासान खान खेस के।
साहिन के साहि जहांगीर जू की सभामध्य
'केसौ राय' राजत हैं राजा देस देस के॥ ९९॥
रोहि रोहितास राठ रूम सामराज भूरि
भख्खर भरोंच भूरि भावते भूतेस के।
चीन चोल चित्रकूट चेद चंपानेर चारु
पानीपथ पारसीक पर्वत प्रदेस के।
हैहय हरेबे हिंगुलाज हुर्मज हजारा
दिली दीपघोखि गिरिनार द्रविडेस के।
साहिन के साहि जहांगीर जू की सभामध्य
राजत हैं 'केसौ राय' राजा देस देस के॥ १०॥

१. द्रष्टव्या 'राष्ट्रौढवंशमहाकाव्यस्य' सी० डी० दलाललिखिता भूमिका, गायकवाड़ ओरियंटल सिरीज, बड़ौदा १९१७ खी०

काँमरू कनौज कच्छ कर्नाठ कैकय कुरू
कासमीर कोसल कुमाऊँ कुंतलेस के।
कामवोज कुंकन कुनिंद अस कुंतीभोज
किरकीची कुल कोल केरल सुदेस के।
कुंडिन कुमार सोम समरक सूरसेन
वाह्लीक साकल सकल निसधेस के।
तैलिंग तिलक विद्यानगर फिरंग सब
साहि जू की सभां राजैं राजा देस देस के॥ १०१॥
मालव मेवार मुलतान सारु मल्लिवार
माथुर मगध मच्छ मेवात महेस के।
वलक वलोच वंग वंगाल वरार विंध्य
वालुका विहार धार वर्बर कुवेस के।
साहिन के साहि जहांगीर साहि जू की सभा
'केसौ राय' राजत हैं राजा देस देस के॥ १०२॥

**लिपिकारस्य परिचय:**

विरुदावल्या: पाण्डुलिपि: डॉ॰ मुरलीधर पाण्डेयमहाशयानां (जम्मू-स्थित रणवीर केन्द्रीय संस्कृत विद्यापीठे प्रवाचकानां) साहाय्येन उत्तरप्रदेशीयमिर्जापुरमण्डलान्तर्गतखटखरियाग्रामवास्तव्यानामुदारचेतसां वयोवृद्धानां पं॰ श्रीप्रेमनाथत्रिपाठिवर्याणां गेहादनेकाभि: पाण्डुलिपिभि: सहोपलब्धा। अस्या लिपिकारा मणिकण्ठसुता: साहजिहानराज्ये वर्तमाना श्रीप्राणनाथत्रिपाठिन: श्रीप्रेमनाथत्रिपाठिन: पूर्वजा आसन्। मणिकण्ठ-त्रिपाठिनो रघुवंशस्य 'इन्दिरा'टीकाकाराणां गोपालत्रिपाठिनां पुत्रा आसन्। चतुर्थसर्गस्य टीकाया अन्ते पद्यमिदमुपलब्धम्—

"गोपाल: सरुआरदेशधतुराग्रामात् सुनौराधिप:
संख्यावत्सु निसर्गभक्तिरसिकश्चक्रे रघोरिन्दिराम्।
शृङ्गारादिविजृम्भिताञ्च सुमुखीं शब्दार्णवादुत्थितां
सेव्यां सर्वबुधैश्चराचरगुरो: पत्नीमिव प्रेयसीम्॥

इति सरुआरदेशोद्भवत्रिपाठिखेदूपुत्रगोपालेन कृतायां रघुवंश-काव्यस्येन्दिराटीकायां चतुर्थ: समाप्त:।"

**सम्पादकीयं निवेदनं कृतज्ञताज्ञापनञ्च**

एकमात्रमातृकाया उपलम्भात्सम्पादनकर्मणि सुमहत्काठिन्यमनुभूतमस्माभिरिति नास्ति वक्तव्यम्। यद्यपि लिपिकारेण साहजिहानराज्ये दिल्ल्यां सता मूलमातृकात इयं पाण्डुलिपिर्लिखिता भवेदित्यत्र नास्ति शङ्कनीयम्, तथापि तत्कृतलिपिवैगुण्येनान्येनापि बहुविधेन हेतुना प्रकाश्यमानेयं विरुदावली सम्पादनदृष्टचा 'पुनर्विचारणीया' प्रतीयेत। कतिपयेषु स्थलेषु संशोधनाक्षमतया कतिपयेषु समासव्यवच्छेदप्रसङ्गेषु भ्रमप्रमादादिसम्भावनया च सहृदयानां विदुषाञ्च सर्वाङ्गीणायां तृप्तौ कश्चन व्याघातः सम्भाव्येत। एतेषां कृतेऽल्पज्ञः कदाचिदयं जनोऽप्यपराद्धः स्यात्। अतः सुधियस्त्रुटिसंशोधनपुरसरं क्षन्तुमर्हन्तीत्याशासे।

विरुदावल्या अस्याः प्रथमतो विद्यापीठस्य शोधपत्रिकायां (भा० ३३) प्रकाशनार्थं यैः स्वीकृतिप्रदानेनानुगृहीता वयमितस्तान् भू०पू०का० प्राचार्यान् डॉ हरिहरझामहाशयान् प्रति हृदयेनाभारभरं विनिवेदयामः। प्राच्यपौरस्त्यविषयाध्ययनाध्यापनयोर्निरन्तरं प्रवृत्तेभ्यः प्रवर्तमानेभ्यो विद्यापीठस्य प्राचार्येभ्यो डॉ० गयाचरणत्रिपाठिवर्येभ्यो नितरानाभ्यन्तरांश्च धन्यवादान् वितरन्तो न तृप्तिमुपलभामहे यैरस्याः पृथग् ग्रन्थरूपेण प्रकाशनमङ्गीकृत्य वयमुत्साहिताः। रघुदेवस्यापि विरुदावल्याः प्रकाशनं प्राचार्यत्रिपाठिमहोदयानां प्रेरणया शीघ्रमेव सम्भविता।

सुहृदा डॉ किशोरनाथ झा शर्मणा भूमिकाविषयकसामग्रीसङ्कलनेऽस्मदीयं साहाय्यमनुष्ठितमिति तदर्थं किञ्चित्कथनमौपचारिकमिव प्रतिभाति।

डॉ मुरलीधर पाण्डेय महाशयैः पाण्डुलिपिः सम्पादनार्थं मह्यं दत्तेति तेषां परममनुग्रहं परिकल्प्य मोदते नश्चेतः।

प्रयागः

बुद्धपूर्णिमा

२२.५.७६ जगन्नाथ पाठकः

श्री प्रेमनात्रिपाठिनां संक्षिप्तवंशानुक्रमः—





स्वतनयेन श्रीब्रह्मेन्द्रनाथत्रिपाठिना सहिताः
श्री पं० प्रेमनाथत्रिपाठिनः, येषां सौजन्येन विरुदावल्याः
पाण्डुलिपिः एतत्पूर्वपुरुषेण श्रीप्राणनाथत्रिपाठिना
लिखिता प्राप्ता ।

हरिदेवमिश्र-विरचिता

# जहाँगीर-विरुदावली

[१]

[1]शरशङ्खशरासनचक्रचकासनचारुचतुष्टयबाहुमती
मधुरध्वनिकुण्ठीकृतकलकण्ठी कण्ठीरवगमना भवती ।
जय लोचनसङ्केतितजगदङ्के पङ्केरुहमुखि सुखितभवे
नवकज्जलवेषे धृतविधुलेखे महिषमतङ्गजसिंहि शिवे ।।

[२]

जयति किल जम्भारिरिव सम्भावितशतकोटिर्न तु त्रोटितगोत्रपक्षः, हुताशन इव हेतिप्रकाशनस्फुरदुद्धतिर्न तु मलिनपद्धतिः, वैवस्वत इव सदैवसुतस्समाचरितदक्षिणदिगाश्रयो न तु वयोऽधिकेषु रुग्णेषु वा दर्शितपराक्रमः, दशमूद्‌र्धेव युद्धे बलीमुखावधृतशुभ्रांशुको न तु प्रांशुकोषपालितनरान्तको न तु देवान्तकः, पाशीव सर्वदा शीलितघनरसो न तु सोत्कण्ठः पश्चिमदिगालम्बने, मारुत इव चारुतरोनपञ्चास(श)द्भावसम्भावितशरीरोत्तमेन जिष्णुनाऽपि शातनीयाङ्गः, राजराज इव भ्राजदलकाङ्गनासुखदमुखचन्द्रमा न त्वेकमात्रमानसकृतप्रेमा, शम्भुरिव सम्भुक्तसर्वमङ्गलो न तु पराभिषङ्गलोलुपद्विरसनं दधानः श्रीसुरत्राणः । यः खलु भास्वानपि नास्वादितद्विजराजकरः, कलानिधिरपि न कुरङ्गवत्सलः;

१— इतः पूर्वं लिपिकर्त्रा 'श्रीगणेशाय नम' इति लिखित्वाऽऽरम्भः कृतः ।

यमाकर्ण्य कर्णमिव नवीनमम्बुजविलोचनोऽपि निजबाहुवर्गचतुरर्गलान्तरालसंवासमासादयति महालक्ष्मीम्[१]; येन जन्मनः प्रभृति परिपन्थिपृथ्वीपतिमिथुनमस्तकानां करवालकर्षणमधीतम्, यस्मै घनानुबन्धगन्धर्वनिकुरम्बसम्वर्द्धितस्वरूपसङ्गीतये शीतकरतरणिताटङ्कयुगलमवधुन्वतो नित्यमेव स्पृहयति पुलोमजाऽपि; यस्माद् विसस्मार वीरविक्रमादित्यविरहवेदनां भगवती विश्वम्भरा; यस्य कीर्तिकेतकदृशौ (शोः?)लोचनकनीनिकेदमखिलमाकाशमण्डलम्; यस्मिन् जगदण्डदण्डधारिणि शशिमण्डलस्येव दोषानुषङ्गः ।

[ ३ ]

अथ कथञ्चिदुल्लसितपाटलिम्नि भगवति पङ्केरुहामादिबान्धवे दिवान्धवेदनापरुषपांशुमुष्टिवत् प्रसरति सर्वतोऽरुणांशुकलापे, शुकलापेषदानमितनिद्रानिकुञ्चितैकदृशि नागरकदम्बके, कदम्बकेशराभिरामरोमाञ्चनिकूतकलेवरं कान्तमपसारयन्तीषु प्रगल्भखण्डितासु खण्डितासु, तिमिरकापालिकस्खलितरुद्राक्षमालिकामनोहारिणि क्वणति मधुकरमण्डले, समुचितं समयमासाद्य, किरात-कौरव-
-कलिङ्ग-कार्णाट-कुन्तल-कुभू [लू?]त-कच्छ-काम्पिल्य-केकय-कामरूप-कोशल--कुरुक्षेत्र-काश्मीर--केरल-करुष--कुन्तिभोज--काम्बोज--
-कोङ्कण-कुशाम्ब-कल्माष-कीर-कान्यकुब्ज-कालञ्जर-खश-खुरशान-
-गुर्जर-गया-गोनर्द्द-गौड--गान्धार--चम्पकारण्य—चीन-चार्वाट-चेदि-
-चोल - त्रिगर्त-तेलङ्ग -दण्डका- दरद-दासेरक-दशार्ण-द्रविड-नेपाल-
-नैमिष-पुलिन्द-पञ्चाल-पाण्ड्य-पव्हर-प्रयाग-पञ्चनद-प्रभास-पुष्कर-
-प्राग्ज्योतिष-विदर्भ-वङ्ग-वाल्हीक-वद्र्धमान-मरु-मलय-मद्र-मारवार-

---

१—लिपिकर्त्रा संवासमासादयति महालक्ष्मीमायेन' इति लिखितम् अत्र संवासामिति महालक्ष्म्या विशेषणत्वप्रदानेन किञ्चिदर्थबोधे सौविध्यं स्यात् । 'लक्ष्मीम् । येन' इति संशोधितमस्माभिः ।

मगध-मोरङ्ग-मिथिला-माल-माण्डवी-मेकल-मथुरा-मत्स्य-महाराष्ट्र-
-शक-शूरसेन-सिन्धु-सौवीर-हूण-हस्तिनापुरप्रमुखदेशाधिपतयो राजान
आजानुबाहवो महाहवोद्दण्डपाण्डवाश्चण्डवाहिनीचरचरणयन्त्रण-
त्याजनायकम...राजेन[?]प्रेषितैरिव निजबालकैः फलकैरवल-
म्बितपृष्ठदेशाः केशादाचरणमतिनिश्चलाङ्गलतिकाविकाशितातिरु-
चिरचित्रलाक्षाः कक्षान्तरव्यस्तहस्तयुगलापदेशेन मनसि नियम-
[य]न्त इव स्वामिभक्तीः प्रतीहारदेशमासेदुः ।

[४]

तदा चैकेन राज्ञा विज्ञापितोऽन्येन पुनरञ्चलेऽवलम्बितः परेण करे कलित इतरेण प्रत्यङ्गमालिङ्गितोऽपरेण चिबुके चुम्बितः कश्चन कुमारमागधो वागधोगतभुजङ्गाधिपः पातिसाहवरवीर-श्रीजहाँगीरप्रबोधनाय दक्षिणं करकमलमुन्नमय्य त्रिंशत्त्रिकां वीर-विरुदावलीं पल्लवयति स्म ।

[५]

उल्लासायतवास्तुपङ्कजवनीवैहासिकोऽयं पुरः
पौलोमीकुचकाञ्चनालकुसुमः स्मेराभिरामो रविः ।
यः पूर्व्वाचलमौलिमङ्गलमलङ्कुर्व्वन् गुणौघैर्भवत्-
तुल्यानुद्भवसप्रतिज्ञदिवसव्यालीढफालीयति [?]॥

[६]

जय मन्मथसुन्दर भूमिपुरन्दर कुन्दरदस्मित रङ्गरते जित-बङ्गपते ।

नवदर्पणगण्डलसन्मणिमण्डल चण्डललितकरिमत्तगते अरि-दत्तनते ।

शशिभावितयुद्धतया भृशमुद्धत शुद्धफलकनिभगुम्फविशोभितवदनविधो ।

मधुराधरपल्लव दलितविपल्लव भल्ल विसर्पिदृगन्तरुचे शुभदन्तशुचे ।

भ्रुकुटिस्फुरदञ्जनकुद्मनु (कुड्मल?) खञ्जन खञ्जनलोचन लोलगते चलचोलपते,

मुखचन्द्रविहारक निर्म्मलतारकहारकलितहृदयैकनभो हृदयङ्गम भोः ।

नखशम्बरवञ्चकसायकपञ्चकसञ्चककरतलतूणधृते हतहूणपते ।

बलिपट्टमनोरमनाभिसुकूपकरूपजलाकृतिरोमलतेरितपाशतते ।

कचराहुनिपीतगलन्मुखशीतमयूखसुधायितरेखमनोहरपृष्ठतनो ॥

नलिनीगणजङ्गमकामविहङ्गमसङ्गमनाभिगभीरसरोलसदूरुतरों । शरणागतपञ्जर जितकालञ्जर कञ्जरचितपदपद्मविधे मणिसद्मनिधे ।

कवितामृतपुञ्जरसिक युवकुञ्जर कुञ्जरमितविलसद्युन (व?)ते गतमद्यमते ॥

कलिकर्णकलिका

[७]

जाने सङ्गीयमाने युवतिभिरभितो भूपरूपस्य बिन्दौ<br>
दस्रौ जातावुदस्रौ मदनमधि रतेरप्युदासीनताऽऽसीत् ।<br>
रम्भा दृष्टिं न सम्भावयति धनदजे किञ्च कर्त्तुं विलासान्नासासङ्कोचमासादयति बलरिपौ सा पुलोमात्मजाऽपि ॥

[८]

जगज्जयश्रियोऽभिरामरोमराजिकानिकामनव्यबाहुचण्डधाम-सम्भवद्यमस्वसा ।

विपक्षमण्डलप्रतापवह्निवारियुक्कलाप उल्लसज्जनानुताप-सिन्धुसेतुसन्निभा ।

स्फुटं यमस्य दुष्टजीवरोषरिङ्गदङ्गुलीव विस्फुरन्महःप्रदीप-दीपनैकर्वात्तिता (का?) ।

यशोऽरविन्दषट्पदालिराहवप्रसङ्गशालिशत्रुकुम्भिकुम्भपालि-सत्कटाहटङ्किका ।

महारणेऽपि तत्र तत्र भीतकालपीकलत्रचारुदृक्सहस्रपत्रमीलने तमश्छटा ।

किरातभूकुरङ्गदृष्टिलोचनैकवारिवृष्टिकारियुद्धयज्ञसृष्टिसुन्दर-स्त्रुवोद्भटा ।

विदर्भवङ्गकामरूपमद्रमारवारभूपसद्यशोविशुद्धरूपकम्बुकूट-शाणिका ।

निकामभीमकालिकेव नाकसीमबद्धसेव चाकसीति दिव्यदेव तावकी कृपाणिका ॥

**शोभनश्लोकाः**

[९]

जय जय शौरध्वजभुजधीर ध्वंनिजितकीर द्रुतपरवीर स्फुट-करवीर प्रतिभटहीर प्रकटशरीर प्रसरदुशीर प्रचुरपटीर स्वकुलकरीर ।

**वीरविरुदम् ॥१॥**

[१०]

सुनयनतार स्फुरदवतार स्फुटमुपकारक्षयितनकार द्युतिजितमार त्रिदशकुमारव्रजसुकुमार प्रसरंदुदार स्वरुचिरदार स्फुरदभिसार क्षितितलसार च्छुरित्तमसारच्छविगिरिसार ज्वलदसिधार प्रचुरतुषारद्युतिघनसारप्रतिनिधिहार प्रथितविहार प्रचलितचार प्रबलविचार त्रुटदभिचार प्रलमदपार क्षितिपतिभारस्फुरदुपहारक्षयितविकार द्युसदनुकार द्युतिमदगारस्थितपरिचारव्रज बहुवारप्रखरकुठार द्रवदिषुधार ॥

कलिकर्णकलिका

[११]

आलपामो मुहुष्पालपाधीश ते जालपालिस्थितो मालपा मे प्रियाः

याहि रे यत्र जीवस्युपालोकयत्युत्तरामेकदृग्दत्तरागः प्रभुः [?]।

वाहराजीमहाडम्बरव्यापृतौ साहिगाजीकुलालङ्कृतौ धावति।

तर्कयामस्तमां सम्भजेतापदं जं (यं?) भजेतापदं चेन्न तस्याश्रितः स्यात् ॥

[१२]

त्वद्बाहुर्वीरदर्वीकरपतिरुदयच्चण्डकोदण्डदण्ड-
व्याजभ्राजत्फणातिस्फुटघटितशरश्रेणिपुङ्खद्विजिह्वः
कुर्वाणः पानलीलां विपुलरिपुलसच्चक्रनिष्क्राममदायु-
र्वायोराशासु काशानिशविशदयशःकञ्चुकं मुञ्चति द्राक् ॥

शोभनश्लोकाः

[१३]

मत्तमातङ्ग सत्तमासङ्ग आगतानीन्द्र नागपारीन्द्र वीरशृङ्गार नीरभृङ्गार चिक्कणाकूत दृक्कणाहूत कामिनीशक्त यामिनीरक्त ॥

वीरविरुदम् ॥२॥

[१४]

जय युवतिकुचाप्तसम्पाकलिम्पाकसम्पातलम्पाकलुम्पाखिलं पातकं पाति चम्पाकसम्पातिकम्पानलं पाति पम्पाजलं पार्थिवानां गणस्ते भयात् ।

जगदपि यशसानुलिम्पानुकम्पाभरं पासि सम्पालयन् पापसम्पातनं पार्श्वगं पामरं पार्थिवं पालयन् पादसम्पातिचम्पारणादिक्षमावल्लभः ।

जगति मष(ख)शतेन सम्पावनं, पावकं पासि तं पानसम्पादितं पातकं पाटयन् पालिकम्पारिसम्पायिनं प्राशशम्पाशतं पातनं पालपेन्द्रानतः ।

त्वमसि निखिलशत्रुलुम्पी नकम्पी भुजं पीठसम्पीडकं पीवरं पीनयन् पीतिशम्पीयकम्पी वहन् पीतकं पीलुसंपीतचम्पीयभूपालसेनाशतः ।

तव जयति रणे सुपर्वाणमर्वा मुहुर्वाचमुर्वालसद्बालधिर्वाजिसर्वाजिनिर्वाहनिर्वागरिर्वातगर्वातिनिर्वाणकृच्छ्राणदुर्वारगुर्वाननः ।

त्वयि चलति चलो विधुर्वा रविर्वा कविर्वा सविर्वा सनिर्वासकृद्वाधिउ[?]र्वानिपर्वागिरिर्वासुकिर्वा नमद्वारिधिर्वातिनिर्वादिनिर्वापक ।

त्वयि चलति जपन्त्यथर्वाणि गीर्वाणगुर्वादिसर्वादिदुर्वाससोर्व्वागरिर्बाहुगर्वादखर्वण्यदुर्वादनिर्बरारचार्ब्बाटमर्वादिमुर्ब्बारवत् कृन्तसि ।

क इव तव तुलां प्रकुर्वीत गर्वी जगद्वीथिगुवीतिचर्वी त्वमुर्वीशखवीकृतिर्वीतदर्वीकरोर्वीपतिर्वारगुर्वीयमुर्वी सुदुर्वीक्षणा युष्मदोजायितैः ।

जय जय जगतामलङ्कारसङ्काशशङ्काकलङ्कारिकङ्कालटङ्कासिकिङ्कारितं काविलं कातरं कातरं कारयन् कामभङ्काहितं कामिनीरत्नमुल्लासयन् ।

जयति धरणिवल्लभं काननं कात्यहङ्कारपङ्कारुणं कामदं काष्ठसंक्रामदं काब्धिकं कातिरङ्काहितं कालसंकालकं कायकं कामयन्तं प्रभापल्लवैः ।

प्रविशति विगलत्करं कातिभङ्कारिभङ्कारितं कालरिंकालिसंक्रामितं काननं कामिनं का न संकान्यतङ्का गदं कारटं कारकं कार्मुकं चेदिहाकर्षसि ।

सुरपतिसमताकलङ्की नशङ्की नपङ्की सुटङ्कीकृतं कीरकीर्त्तितं कीलितं क्रीडितं कीदृशं कीर्तिपूरं न भूमण्डले सन्तनोति क्षमावल्लभः ।।

कलिकर्णकलिका

[१५]

भ्रमरसमरवलितललितकटकघरकसिन्धुरे
नलिनमलिनकरणचरणवदनमदनबन्धुरे ।
भवति चरति महति सगिति नमति नृपतिमण्डली
दमितनमितशमितगमितसुतनुरतनुमण्डली ।।

[१६]

स्फाराम्भारारम्भे कुम्भे भणनभणनभणभणदलितरुणः
स्कन्धावन्धी लोलल्लोलद्रणनरणनरणरणदुरुरसनः ।
याति स्वैरं युष्मत्कुम्भी झणनझणनझणदनुपमनिगणः
स्त्रीभिः पृष्ठे गायन्तीभिस्तननतननतनतरलितनगरः ।।

[१७]

स्त्रीषु त्वं कुसुमायुधोऽसि दुरितोद्रिक्तेषु दण्डायुधो
हृन्मत्तेषु हलायुधो बलिविपच्चक्रे तु चक्रायुधः ।
क्षोणीभृच्छतपक्षविक्षतिविधौ वज्रायुधो न स्फुर-
त्यादर्शं कमिवारचय्य रचितो धात्रा धरित्र्याः पतिः ॥

शोभनश्लोकाः

[१८]

महितलमारार्थिततर समधिकसारार्पितशर
हृदमलहारार्दितपर तरुणिमतारार्चितहर ॥

वीरविरुदम् ॥३॥

[१९]

जय जय मतिपरिणामकलितहरिनामकदम्बक,
जय जय खरसुविरामविदित भुवि रामविडम्बक ।
जय जय परमनिकामरुचिरमणिकामधुरन्धर,
जय जय मरकतधामरसिकशतधामरबन्धुर ।
जय जय विहसितराम नयनवितरामनतिक्रम
जय जय नृपकलिवामनमितबलिवामनविक्रम,
जय जय पिशुनसभामनिखिलसुषमामणिदीपक,
जय जय कुलजनतामरसितसुलतामणिनीपक ।
जय जय शतदलदामललितदलदामयपत्तन,
जय जय मुनिवरसामसरसतरसामहिनर्तन ।
जय जय भुवनललामजनितसकलामरवन्दन,
जय जय रिपुविधुयामविदितविनयामलचन्दन ॥

कलिकर्णकलिका

[२०]

कमलमदमोचने तव चलति लोचने
दिवि हसते न का भुवि तु रमते न का ।
यदि नयनमर्व ते चलति गुरुगर्व ते
रिपव उरुपर्वते मशकमनुकुर्वते ॥

[२१]

रम्भास्तम्भानुकृत्या वरकरटियुवोन्मूलयत्यूरुयुग्मं
दन्तानुत्पाट्य कर्णे कलयति स वरं श्लाघ्यमाध्यभ्रमेण ।
पारीन्द्रोऽपि प्रबुद्धः क्रकचति कुचयोः कुम्भिनः कुम्भबुद्ध्या
वीर त्वद्वैरिणीनामपि घनविपिने दैवदृग्दारुणैव ॥

शोभनश्लोकाः

[२२]

कलितरण कलितरण महिमधुर महिमधुर वलितनय
बलितनय परमहित परमहित नमदयुत नमदयुत ॥

वीरविरुदम् ॥४॥

[२३]

श्रिया नाकलुण्ठा...करालः क्वणत्किङ्किणीचङ्क्रमालङ्कृतश्रीः ।
ध्रुवं चर्वयन् सर्वतः शर्वरीशं बलत्तारकस्तारमत्तान्धकारः ॥
मसीतत्यसीमातसीपुष्पनीलं दधत्कुम्भकूटस्फुटारम्भमम्भः ।
अहो यामुनं वारि किं वारिणं वा कलिन्दाचलं दारयद्यातमुर्वीम् ॥
घनानन्दनिष्यन्दमैरन्दवृन्दप्रणन्दन्मदस्यन्दसन्दर्भिकुम्भः ।
समीकाध्वरे रक्षिकाजालभाजा वसोर्द्धारयेवानुबद्धात्मभित्तिः ॥

ससिन्दूरबिन्दूदयद्दूरशुण्डः मदभ्रातिशुभ्राधिकभ्राजिदन्तः ।
नवाखण्डलोद्दण्डकोदण्डशाली बलाका निराकारयन् कालमेघः ॥
यमोद्दण्डदण्डाभशुण्डानुबद्धः शिखामूलतःस्थूललाङ्गूलनद्धः ।
यथैवोभयाशाहिपाशावकाशा महासुन्दरो मन्दरोऽमन्दरोचिः ॥
निजद्योतविद्योतितद्योतनाभ्रं दधच्चामरं धाम मुक्तामणीनाम् ।
निराधारसञ्चारसम्भारभाजा वियद्गङ्गयेवाङ्गमालिङ्गिताङ्गम् ॥
उदञ्चन्मदाम्भोतिसम्भोगलम्भोद्भटालिच्छटातिस्फुटाच्छादितद्यौः
वसत्येष मत्तेभयूथाधिपत्ये पवित्रातपत्रावृतस्थावनाकिम् [?]॥
महोत्तालमत्तालसत्तालशुण्डः सुनासीरनासीरनाशीरणेषु ।
कदा नारदानाय दानाम्बुधारी धराजन्यराजन्य राजाधिपस्ते ॥

**कलिकर्णकलिका**

[२४]

मुक्ताप्रस्तरनिस्थुषी करणिकाहेतोः कटः प्राङ्गणे
जागर्त्ति श्रुतिशूर्प्पनर्तनपरो युष्मद्गजग्रामणीः ।
स्फीतं यद्दशनप्रकाण्डमकृशक्रौञ्चावलीभृत्तट (टैं?)
शुभ्राविर्भवदर्भहंसपटलप्रागल्भ्यमभ्यस्यति ॥

**शोभनश्लोकाः**

[२५]

मन इव नभसः पताकापटाकारतो वेपते हे पते गच्छ गच्छेति कच्छे महोदन्वतस्थ(स्त?)न्वते निर्भरध्वानमध्वानमध्यात्मनः किं लघुत्वाय मुक्तांशुकैरङ्गकैरङ्गनाः ।

प्रतिभटपटलीतिरस्कारढक्कारवप्रोल्लसल्लोलकल्लोलदोर्बन्धनै सिन्धुनेयं धरा स्थापिता सापि तावद्रजःपूरकर्प्पूरमुष्ट्यावृणोति स्फुटादित्यदीपं दरव्रीडया ।

अथ गमनविलम्बिकादम्बिनीचारुचित्कुर्वते पर्वतेन्द्राभिरामद्विषो दिङ्मतङ्गा भृशं गाढवक्षोभवक्षोभशुष्यन्मदाम्भोमरूभूतकुम्भस्थलीमूकमत्तालिवैतालिका [:] ।

त्वयि चलति चकोरबन्धुश्चिरं धूरिलीलायितोऽम्भोधिगर्भाधिरा(वा)सव्यथामद्य सद्यः स्मरन्त्युद्भटं भोगिभर्तुर्मटत्कृत्य मध्ये मृणालीवदाशु द्विफालीभवन्ति स्फुटाः ।

[२६]

वियन्मापनस्तम्भवद्राजमानोऽ-

भवद् राजमानो रणप्राङ्गणेषु ।

गिरीन्द्राकृतिस्ते मतङ्गाधिराजो

मतङ्गाधिराजोद्भवस्येव शिल्पम् ।।

शोभनश्लोकाः

[२७]

अरुणीकृतकर चरुणीकृतनर तरुणीरसपर तरुणीरसपर ।।

वीरविरुदम् ।।५।।

[२८]

प्रक्षालितमुख यक्षाधिकसुख रक्षापरुष बुभुक्षाकुलनर मक्षानकवर भक्षार्प्पणतर पक्षाश्रयणसमक्षागतजन कक्षाहितकर रक्षाविनत ऋभुक्षादिकसुर उक्षालसगत कुक्षावतिकृश प्लक्षादिकघनलिक्षायितपर भिक्षाशरणविलक्षाहितगण दक्षादपि कन(ण)भक्षादपि सुविरक्षातिनिपुण त्र्यक्षानतसित पक्षामलनव दाक्षायणिधव शिक्षापकयुध लक्षाहितशर पक्षानिलकर शिक्षातलदर लक्षादि(धि?)कहय सक्षात्रियचय नः क्षासयभय मक्षानभिरत सक्षातव-

धीरवक्षा भवदरिरक्षारवचन (ण) सक्षाकृतिगजपक्षानतकुथकक्षा-सतघन लक्षादपि शतलक्षार्प्पकपरपक्षावलित्रि[तृ]णकक्षानलघन ऋक्षाधिपमुख लाक्षारुणनख द्राक्षावचन वलाक्षावरधर साक्षादरुण तितिक्षावरुण जिघृक्षारहित मुमुक्षासहित यियि(य?)क्षाविदलित रक्षामदनसदृक्षाकृतिरसि भिक्षावधिकदिदृक्षाजनकविपक्षावनिप तरक्षारिभ इव दक्षारिनयनप्रक्षारितजल कक्षाधरनिजिघृक्षापरिचल दक्षासकटकरक्षावनिमख नश्छादय रुजमक्षायतभुज ॥

कलिकर्णकलिका

[२६]

जय जय जगदेकरक्षाकरक्षात्रकक्षानुकक्षापरीक्षामुदक्षातिदक्षाधिकक्षान्तिपक्षाश्रितक्षामलिक्षामलक्षाग्रतक्षातिशिक्षारि (ऋ)-भुक्षात्मज ।

त्वमसि भुवि नवीनयक्षाधिपश्छान्तपक्षारिवृक्षासिकक्षानलश्छादकक्षातलक्षाहितक्षातयक्षाकरक्षालितक्षात्रियोध्वा (च्छ्वा)-सिवक्षाः सुभक्षालयः ।

कलयसि गुणवद्दिदृक्षाविवक्षामुमुक्षायियि(य?)क्षारिभिक्षासिसृक्षास्वमक्षाहितेक्षाविलक्षान्तरिक्षादिरक्षाः कटाक्षासदृक्षास्य पक्षान्तरिक्षाधिपः ।

प्रतिभटपटलीदिधि(ध)क्षाधिकक्षारकक्षावलक्षाश्वनक्षातिलक्ष्याम्बुजाक्ष्याकुजाक्षार्द्धदीक्षाभरच्छायकुक्ष्यागतक्ष्मालितृक्षातपच्छात्रवक्ष्माधवः ।

[३०]

क्षान्तोऽपि त्वमभू [:]क्ष(क्षु?)रप्रशिखरप्रक्षिप्यमाणेक्षणः
क्षीरोदावधिकक्षमाधिपतयः क्ष्वेडैरिव क्षालिताः ।
क्षोणीन्दौ क्षणमुत्थिते क्षितिभृति क्षिण्वन्त एते क्षपाः
क्षुभ्यन्ति क्षुभिता अपि क्षत इव क्षारोक्षणैः क्षत्रियाः ॥

[३१]

युष्मद्यशोजालपान्थस्य भूपाल ।
इन्दुं किल स्वेदबिन्दुं जगद् वेद ॥

**शोभनश्लोकाः**

[३२]

भूपरूप कूपसूप धानगान पानतान शुद्धबुद्ध युद्धरुद्ध कीरवीर धीरहीर खण्डदण्ड चण्डपण्ड ॥

**वीरविरुदम्** ॥६॥

[३३]

माराधितसुख माराजितमुख मारालकरुचिदारकहारक
भाराघरकल भारामितबल भारानमितभुजङ्गमपुङ्गव ।
धारायितबहुधारायितविधुधाराधितशरदायकनायक
हाराचरितविहारामृतवसुहारावितपरपत्तनकर्त्तन ।
कारातपदपकारावहसहकारातिमधुरजल्पनकल्पन
दारावलिबलदारामकजगदाधारकरणचत्वरसत्वर ।
सारीकृतशुकसारीनुत सहसारीनपनय गर्ज्जकतर्ज्जक
मारीहरसुकुमारीकृतसुकुमारीकृतरत निर्द्धनवर्द्धन ।
तारे युधि समितारे निरूपमतारेश्वर सुखसद्रदभद्रद
चारोदितपरिचारोचित युधि चारोहसि तुरगन्धरकन्धर ।
सारं वह सहसारञ्जकसहमारुन्तुद रिपुदारकपावक ।
सारङ्गनयनसारम्भणघनसारं जयति यशस्तव सम्भव ॥

**कलिकर्णकलिका**

[३४]

यात्रायामपि कीर्तयस्तव न वा यद्रोहिणीवल्लभ-
द्रोहिन्य(ण्य)स्तदवैमि मङ्गलनृपैरेवासि धात्रा कृतः ।
रम्यं[?] श्रीभरतो मुखं हि भवतो जार्गत्ति दन्तोऽर्जुन-
स्त्वद्भ्रू विभ्रमने(णे)विभाति न लता भव्यो भुजस्ते पृथुः ।।

[३५]

स्वमालतिकेव भुजस्तव देव रणे यमपाश इव प्रचकास
पुरे भवतस्तु जगत्त्रयवस्तु रुजैव पवित्र न केवलमत्र ।
उपैति दृगन्त नवस्तव हन्त करे विहरन्ति जवेन जगन्ति
इह त्वयि देव न तं जगदेव पुनर्बलदेव विलासमुदेव ।।

शोभनश्लोकाः

[३६]

लोलभृङ्ग चोलसङ्ग दोससङ्ग भोलवङ्ग वृन्दवास वन्दिवास
कुन्दलास तुन्दिलास द्रोणवद्य शोणवद्य घोणहृद्य घोणसद्य हीनदेश
धीनदेश दीनकेश चीनकेश तारतुङ्ग सारभङ्गभारभङ्ग चारचङ्ग।।

**वीरविरुदम्** ।।७।।

[३७]

आरादाराधितनर नारावाराजितकर शोचनसोचन ।
वीराऽवीराकृतकृप धीरानीरासितनृपमण्डलकुण्डल ।
तारादारायितमुख पारावारायितसुख शङ्करकिङ्कर ।
नीराधीरायितबहुचीराभीरायित महिवल्लभ दुर्ल्लभ ।

हीरामारायित हसतारागारायितयश उद्यतहृद्यत ।
श्रीरातीरावलिभरकोरासीरायुधनर कृष्यसि हृष्यसि ।
साराचाराशय परिवाराधाराधय हरिचन्दननन्दन ।
कीरालीराधितवलभीराशीराकृतबलपत्तनमत्तन ।
कारागाराहितजनधारासाराधिकधनदायकनायक ।
हीरालीराजितकर वीरानीराजितवरसिन्धुरबन्धुर ।
आरामाराधनधनसाराकाराधिकघनकुन्दकनन्दक ।
सीरागी रार्जसि गतभीराभीराधिपनतभूजनपूजन ।।

**कलिकर्णकलिका**

[३८]

शङ्करमाधव शङ्करमाधव शीतलरोचित शीतलरोचित काननकोटर काननकोटर वाहितमण्डल वाहितमण्डल चापलतापित चापलतापित राजतराजित राजतराजित वासवधूपन वासवधूपन दारणसाहस दारणसाहस सायकरावनिकायकरावनि रङ्गरसङ्गत सङ्गरसङ्गत वैरवदावलि कैरवदावलि कैरवदावलि लङ्घयिदारुण संहतिदारुण सुन्दरदानिव कुन्दवदानिव धूसरमण्डल धूसरगण्डल मन्मकरीशत कर्मकरीकृत पाणितलक्षण माणितरक्षण ।।

[३९]

स्वामिन् दुष्करयुद्धपुष्करमधि त्वद्बाहुबाहुर्भृशं
भ्राजत्कङ्कणपुञ्जकुञ्जरशिरःसूरं समाक्रामति ।
स्नाता नेत्रजलैः कृशानिव तृणान्यादाय ते कुर्वते
तादृग्गर्वसुवर्णपर्वतमहादानं दिशत्सैनिकाः ।।

**शोभनश्लोकाः**

[४०]

मत्तचलद्गज दत्तवलद्व्रज शक्तरणक्रिय भक्तजनप्रिय मुक्तमतिभ्रम युक्तमतिक्रम ॥

वीरविरुदम् ॥८॥

[४१]

कातरित खातजित गोरमण घोरजन चित्रकर छत्रधर जल्पिजय जल्पितहृय टापजर चापघन डिण्डिमक ढुण्ढिचर नापपत तापशत थाथकृत दानभृत धालपर नालशर पल्लवित फुल्लसित वल्लिरत भल्लिहृत भल्लशत यत्नपर रत्नवर लाभपण वाभगुण शातिनहु खातिबहु सत्यगत हृत्यवत क्षयचय[?]मद्रजय ॥

कलिकर्णकलिका

[४२]

बभ्राम शुभ्रा महीमण्डले वीर भूपाल कीर्त्तिः स्वकापालिकी कापि ।

चन्द्रोऽयमुद्दामचैत्रक्षपालम्पटस्तत्कपालं पटः स्वर्णदी भाति ।
चापप्रतापस्तवोदेति लोकेषु पण्डायितो देव चण्डातपो येन ।
अम्भोधिसम्पायझम्पादितो ह्येष भूयो दुराशाभिराशामुखं याति ॥

[४३]

प्राप्यद्दुत्तरवारिताण्डवतमोविस्तारमस्तायते
तत्तादृग्भटभीमभालवियतः सिन्दूरबिन्दू रविः ।
वारंवारविधूतनूतनपटोन्मीलन्निमीलद्युति
द्योतन्ते द्विषतां त्रिकूटकटके खद्योतवद् योषितः ॥

शोभनश्लोकाः

[४४]

धीरललित वीरवलित चीरचलित कीरकलित कुन्दकदन कन्दरदन वृन्दवदन मन्दमदन सारसहित मारमहित पारप्रहित दारदहित सर्वस(श?)मन गर्वगमन सर्वसुमन उर्वदमन तुङ्गतनय बङ्गविनय सङ्गमणय गङ्गगणन ॥

वीरविरुदम् ॥६॥

[४५]

अमरसम समरयम वरसदम सरसगम तरुणतम वरुणरम पवनजय जवनहय अरिभवन परिभवन भ्रमदगज समदगज अहिमकर महिमकर भयदमन हयगमन चलदसिक बलरसिक नमदहित शमसहित अमितबल स(श)मितखल गलितरुज ललितभुज सुचिरसुख रचितमुख अमलतर कमलकर धृतहसन सितवसन मधुगदन विधुवदन गुणसदन घनरदन ॥

कलिकर्णकलिका

[४६]

वङ्गद्वङ्गद्वाजिभ्राजद्वीचीनीचीभूतार्क्कः
स्फाराकाराम्भोदक्षोदेभालीकालीभूताभ्रः ।
दत्तच्छत्रश्रेणीफेणीभावं धावन्नाकाशे
धत्ते चित्ते मोदं कोदण्डाहिर्वाहिन्यद्धिस्ते[?] ॥
क्रुद्धा युद्धारम्भे दम्भेनालं कालं कर्षन्ती
शम्पाकम्पाधारानाराचालीष्कालीवोज्झन्ती ।
सेना तेनाशक्तारक्ता शुद्धे युद्धे नृत्यन्ती
राजन् राजन्येषा लेषा(खा)धीशं कीशं कुर्व्वन्ती ॥

[४७]

युद्ध्यन्भूमिजिघृक्षयैव सबलः क्षिप्रं भुवि प्रापितः
कुर्व्वन् तच्च पदस्पृहामहरहर्न्नाकाय चाकारितः ।
कामं चामरयुग्मलोभचपलः सद्यो जितश्चामरै-
स्तत्किं वीरवर त्वयाऽरिनृपतेः क्रुद्धेन युद्धे कृतम् ।।

शोभनश्लोकाः

[४८]

ग्रस्तत्रस्तप्रतिबलमतिनल मस्तग्रस्तस्फुटखलपटुवल हस्त-न्यस्तक्षमशरशमधर ग्रस्तव्यस्तप्रतिभटहतनट न्यस्त[?]प्रस्तम्भितनृप कृतकृप ।।

वीरविरुदम् ।।१०।।

[४९]

भयभञ्जनसञ्जननञ्जनदञ्जनखञ्जनगञ्जनकञ्जदृशं तनुमध्यकृशम् ।

स्थलपङ्कजराजिविराजितराजतराजसमाजनमन्मुकुटं वलदक्षिपुटम् ।

अनिशं गिरिशृङ्गवदङ्गतुरङ्गमसङ्गमरङ्गमनङ्गसमं भवभङ्गयमम् ।

वियदङ्गनरिङ्गनभृङ्गनखद्घनटङ्गनतुङ्गतरङ्गपरं गतरङ्गपरम् ।

कुण्डलतारकचुम्बनचिक्कनचारुचमत्कृतचन्द्रमुखं वलदिन्द्रमुखम् ।

महिमृन्मणिमौलितयन [?] परिरम्भन(ण)चारुचरतरणतलतामरसं घनकामरसम् ।

लपितत्रपितामृतमुक्तमहातपवारणहिमरुचिमहितसुखं हृदि रहितरुषम् ।

प्रणमद्धनुरिन्दुकलाविशिष(ख)द्युतिविद्रुतवैरिमहातमसं महि-चन्द्रमसम् ।

अरिसुन्दरिमण्डलगण्डदलस्थलदृग्जलकज्जललिखितगुणं गुण-सुखितजनम् ।

रिपुमोहसमर्प्पकदर्प्पसुसर्प्पविसर्प्पदहर्प्पतिरत्नवरं जययत्न-परम् ।

विषदद्विषदञ्जलिशुक्तियशोमयमौक्तिकमण्डितमहिमहिलं विन-यग्रहिलम् ।

प्रतिपद्य भवन्तमरन्तमनन्तपदं तृणयत्यचिरेण धरा गुणपुञ्ज-परा ॥

कलिकर्णकलिका

[५०]

इदं तव यशोरिपुक्षिति[प]दुर्यशोनील[युक्?]
युताम्बरविशोधनप्रसरदूषजूषद्युति ।
कुहूनिशिरहन्मुहू रजनिवल्लभोल्लासनं
पयोदसमयोदये हरति हंसहानिव्यथाः ॥

[५१]

इयमखिलमही महाराज ते राजते खड्गसौदामिनीदामिनो तेन भीतेव दिक्सुन्दरी सुन्दरीभूतसेनाचलद्वाजिधारामधाराल-योद्धूतधूलीवृतिच्छद्मना मीलयत्यर्क्कचन्द्रेक्षणे ।

रणरणितनिकामभव्यामलव्यामलम्बैकघण्टेभदानाम्बुवर्षाति - वर्षातिपातेन दिक्कुम्भिमानामयूरावलीरावलीनां विधत्तेऽथ भव्या-कुलव्याकुलः स्पन्दते राजहंसोत्करः ।

चलति चरणचङ्क्रमादेव विश्वम्भरा देव विश्वम्भरा भुग्नमास्ते विमाना विमानावलीविभ्रमेवाचिरं भासमाना चिरं भासमाना विरोधावलम्बिप्रिया विप्रियाढ्या गिरीन् गाहते ।

ध्वजपटपटलाङ्गुलीभिर्म्मृज्यत्यम्बुधिश्चौतमासन्तसामन्तहृत्ता-पगाढाग्निधूमानुरूपांशुभिः पांशुभिर्दूषितं पूषनेत्रं हरिन्नागरी-नागरीतिस्फुरद्बाहुदण्डप्रयाणे तव ॥

[५२]

नलो गतबलो मतः कुरुगुरोरुरो भिद्यतां
पृथोरिह वृथोदयः क इव कर्णमाकर्णयेत् ।
अगीरथ भगीरथस्त्रुटितगौरवाः कौरवा
भवद्भुजभुजङ्गमो यदधुना धुनीते धनुः ॥

शोभनश्लोकाः

[५३]

सीरधर वीरकर धीरतर कीरकर नीरभर तीरचर चीरधर कीरकर वीरवर हीरशर ॥

वीरविरुदम् ॥११॥

[५४]

दलयसि परबलमानमनिलसमानमनिलसमानतुरगनिवह वहसि सुकृतमनिदानकृतमनिदानवहुतरदानवहुतरसिकतररसिकरतनकृततालचलकृततालभुजगतपनभुजगतपरणवनवयुवसुवलितरङ्गसुवलितरङ्गरुचिरसकलरुचिरसकलसलसदनुपमकरवालदलकरवालदलपरवादनकुशल शलभितविधुरविरोधिविधुरविरोधिसुरवरयोधिसुरवरथकरथकरिपरशुकलापपरशुकलापरसुमतिरुचिरसुमतिरुचिरचिरचटुमधुरमणीकमधुमधुरमनीकपृथुलसदसिपृथुलसद - सिकसदसिकरनवहुमानन वलहुमानतपनसमानतपनसमान तपनसहितहितपरिचरणप्रवालचरणप्रवाल करतलवालकलितललित धवलिमलसितविसारिहसितविसारिकुवलयनयनकुवलयनयन रणविकशितरवारिविततरवारिपरमदहनपरमदहन ॥

कलिकर्णंकलिका

[५५]

जय जय जितवलदेव देव दुर्ज्जनगणगञ्जन,
महितलतिलकनिकामनव्यनिर्म्मलकलिभञ्जन ।
वदनकमलविनिविष्टहृष्टनयनस्फुटखञ्जन,
सम्मुखमनुजसमाजराजपदवीमुखसञ्जन ।
अभिनवनिर्म्मलचरितभरितभुवनश्रुतिकन्दर,
दुर्घटघटकपयोधिमध्यमर्द्दनघनमन्दर ।
चञ्चलचकमकचारुचन्द्रचिक्कणमणिमण्डन,
निजभुजभुजगविपक्षलक्षाहृदयानिलखण्डन ।
उत्तानतरङ्गतुरङ्गखुरदलितललितभटमुकुटचय,
तलमलितविसर्प्पितजलधिजलघृष्टपुष्टभुजविजय जय ॥

[५६]

कीर्त्तिस्ते राजहंसी चलति महिमनीहारनीहारभूभृत्
कन्दादाहृष्टमन्दाकिनि विलसति का दीर्घदिग्दीर्घिकासु ।
जानीमस्सङ्गतासीदियमिह चरता सोमहंसेन तत्त-
न्नक्षत्रस्तोमडिम्बावलिरभिलुठति व्योमपृष्ठे तदस्याः ॥

शोभनश्लोकाः

[५७]

मुखविधुरि(वि?)धुरितसरसकलाधरगुणमधुमधुरिततरसकलाधर ।
मुखरुचितुषक्कतिकितवसुधाकर नृपतिपरिषदुष(प)क्कतवसुधाकर ।
कुसुमविशिखसम···रतिभाजन युवतिवदनहिमकररुचिरसभाजन।
गुणगणविरचितसकलसभाजन मरकतमणिमयसकलसभाजन ।
रमणिमनसि मनसिजसुमनोरमस्मितविरचितचिरचितसुमनोरम॥

वीरविरुदम्॥१२॥

[५८]

मनसिजनीलागञ्जक निरुपमशीलाभञ्जक ।
रिपुहृदि कीलासञ्जक निजकुलरञ्जक ॥

[५९]

जय जयोत्कलिकाप्रायकामकल्लोलितव्यक्तरोमाञ्चकञ्चु-कितकुचकाञ्चनाचलकलावतीकदम्बकोलाहलितकीर्तिडिण्डिमप्रचण्डिमध्वनितगजदण्ड ।

जय जय यमदण्डताण्डवितकुन्तखण्डितारातिरुण्डमुण्डावली-कमण्डलुमण्डितव्योममण्डितोद्दण्डकीर्त्तिकापालिकश्रीखण्डखण्ड-कायमानशशिखण्ड ।

जय जय चण्डमुण्डासुरचिपिण्डचङ्क्रमितचामुण्डादशनप्रकाण्डवैतण्डिके ष्त्र(स्वं ?) पक्षानिलद्विखण्डितद्विषदेरण्डखण्ड ।

जय जय सङ्ग्रामशौण्डचिक्कणकृपाण कूष्माण्डवद्दलित-गण्डकस्तूल (स्थूल ?) सामन्तकन्धरक्षतजकासारकारण्डरीकृत-रिपुशिरस्त्राणभाण्डेनसदनरेशभ्राजद्वेषद्विषदरविन्दोच्चय जय-दिन्दो ।।

कलिकर्णकलिका

[६०]

पाण्डचप्रभोः पुण्डरीकेक्षणाकुण्डलोद्दण्डमार्त्तण्डनिष्खण्डनप्रौ-ढबाहूभवच्चण्डकाण्डावलीकुण्डलीभूतकोदण्डपाण्डित्यकण्डूलदोर्द्द-ण्डनिश्शुण्डवेतण्डगण्डस्थलीगण्डशैलोदयत्पाण्डवाखण्डमुक्तामहात-ण्डुलस्तोमनोराजिताजाण्डसन्मण्डपोद्यन्महीमण्डलोदूढदिग्बाल हिण्डीरपिण्डीभवत्कीर्तिचण्डी यदाकाशकासारकाण्डीरकाण्डीर-सण्डीननाराचतुण्डीयभारातिखण्डीकृताराविभाण्डीरदोश्शाखदेव-द्विषद्भूमिरण्डाकरण्डीकृतद्वेषिमुण्डीयपूर त्वया भीष्मशुण्डीन्द्रसिंहः शिखण्डीसपण्डीयते हन्त चण्डीपतिः सोपि चण्डीस(श)गाण्डी-वधन्वापि ।।

[६१]

द्विषस्तत्रमण्ड मटद्भुजदण्ड।
पिबन्ति सुखण्डमिवाहवचण्ड।।

[६२]

काण्डैः खाण्डवसीम्नि ताण्डवयता गण्डस्थले गाण्डिवं
येनाखण्डलगुप्तकुण्डलिकुटीकुण्डेऽनलः पिण्डितः ।
येनाखण्डि शिखण्डिवाहनपितुर्दोःकाण्डकण्डूरसौ
कोदण्डे भुजदण्डभाजि भवतः पण्डायते पाण्डवः ।।

शोभनश्लोकाः

[६३]

तरणधरण चरणशरण भरणकरण करणहरण सरणसरण ॥
वीरविरुदम् ॥१३॥

[६४]

गुणवन्निकुरम्बनिकामहिते महितेभरणांभरणासितरे
सितरेचितकीर्तिलतासुरसे सुरसेवनकेवललम्बिशिखे
विशिखेद्धविरुद्धकदम्बमृतावमृतादपि तावरसालपने
लपनेन्दुसनिद्रसरोजवने जवने रणसीमनि भीमनिभे
मणिभेदितगाढतमोभवने भवनेत्र इवातनुमोहरसे
हरसेवकवद्घनभूतिधरेतिधरेन्द्रवदुत्कर राजनते
जनतेक्षणवच्छुतिचुम्बिमुखे विमुखेश इव क्रतुदानवहे
नवहेलिवदभ्युदयत्कमले कमलेश इवाघनरकशमने
शमनेङ्गितवज्जनपापरमे परमेष्ठिवदथ चतुराननके
ननकेतकवद्भवमुक्तरसे तरसेन्द्र इव क्षितिभृत्तपने
तपनेन्दुवदञ्चितविष्णुपदेऽनुपदेशिभवत्कुनयाचरणे
चरणेन चलत्कमलाभरणे कमलाभरणे समरङ्गमिते
समरङ्गमिते वसुधामहिते वसुधामहिते सुरसारमिते
सुरसारमिते सुभग त्वयि भूः ॥

कलिकर्णकलिका

[६५]

जय वीर तुरङ्गमरमणघनतुरगतरलतरधुरवलय ।
विभ्राजिविधुन्तुदविकलबहुवीरमुकुटमालमिहिरचय ॥
मत्तालिकरटिवरकोटिकटविकटकटाहकतटपटल ।
पटपटितशिलीमुखबिलगलितरुधिरवल्लिवरविजयफल ॥
जय वीरधरालसुरधरालचपलपत्तिभटकटकशत ।

डगमितमहीतलवलयढणढणितढक्कायितपर्वत ।।
उद्दण्डचलितभुजदण्डवसवलितशरासनवलयलय ।
मणिकुन्तलमण्डलदिवसकरपरिधिबुद्धपरविनय जय ।।

[६६]

त्वन्नासादलदोलनेहवमणेनासादयन्तः स्वयं
चारुण्यं कृतमौलयोर्नयनयोश्चारुण्यलेशे तव ।
शङ्कामन्दरवास्तवाननविधौ कामं दलद्भ्रूलते
दन्तावद्धमृणाजना यदि मनाग् दन्तावलं पश्यसि ।।

**शोभनश्लोकाः**

[६७]

श्यामहरिनामपरिणाम करिग्रामधरधाम रसतामरसवाम-हस रामलसदामहितदाम हितराम जितराम जितभाम हित-भास हितचामरितचासरित कामकर कामकर सामपर सामपर धामधर धामधर वामनर वामनर टामतर नामनव सामलय सामदय यामजनतामरण पामरण तामसन काममभिकामशुभ नामतर यामभुव सामयदुरामविधुषामयुतसामनुत् ।।

**वीरविरुदम्** ।।१४।।

[६८]

समराधिकरन्ता रिपुनिकरं तापयति परं तावककटकः
प्रचलितहरिदन्तालयसुरदन्तावलवरदन्ताहतिघटकः ।
चलति त्वयि लङ्का कलितकलङ्का विशति बिलं कातरितमुखी

न चलति सकलं काननपटलं कारतरिकलङ्काविलसुमुखी ॥
जलधर्जितशम्पा विशति भृशं पारकमनिशं पारगवनिताः
न हि कुचमनुकम्पालयपृथुकं पाययति सकम्पा सुरदयिता ।
बलवत्यपि चम्पावदनरुचं पाति नवकुचं पारणमहिला
घनरत्नशुचं पाटयति कुचं पालयति शुचं पारदचपला ॥
तृणमेव निजं भावयति भुजं भासितमपि रम्भासुरदमनः
त्रिजगत्यपदम्भा दृक्चलदम्भा त्यजति मदं भामपि समनः ।
कृतपतिपरिरम्भा विचलति रम्भा दलरुचिरं भारतललना
विहरणसारम्भा विहसति रम्भा सुचिरतरं भावितदमना ॥
उरसि स्फुटमालोलितमालमालो दिशि दिशि मालो गमनपरः
कमताव[?]निपालो विपदमुपालोकयति कपालोपहितकरः ।
निवसति नेपाली गिरिवरपालीतरुविटपालीमधि विधुरा
परिनृत्यति कालो घनपुलदिवि[?]काली सुविपुलकालीयमधुरा ॥

**कलिकर्णकलिका**

[६९]

बङ्गास्सङ्ग्रामरङ्गातुर जहति भृशं गामनङ्गाभतुङ्गा-
स्तुङ्गा गङ्गातरंगा क्षितिरपि रजसाङ्गारमङ्गालिलिङ्गाः ।
अङ्गा भृङ्गा लवङ्गालिषु जहति वनं गात्रभङ्गान्मतङ्गा-
बङ्गालाङ्गानिरङ्गावलिवदजगलङ्गाचमङ्गारसङ्गात् [?] ॥

[७०]

सर्वसङ्गापितोदारशृङ्गारनीरैकभृङ्गार युष्मत्तुरंगावदानप्रसं-
गाकुलः को न गंगापतिं देव संगाहते: [ते]
सन्मृदंगाजिवाजन्निषङ्गा—

भिलोलद्भुजङ्गाभबाणाभिषङ्गादमी धिक्कलिङ्गा विस-(श)न्ति प्लवंगा इव प्रौढतुङ्गाटवीः ।

भीतभामिन्यपाङ्गालिभङ्ग्या पिस[श]ङ्गाननं भामभङ्गाद् विहङ्गायितं भ्रामभृङ्गालिसङ्गाभिवङ्गालयं भ्रामनीमण्डलं गाढमाकर्ण्य संग्रामरङ्गागतं त्वामनङ्गारिरङ्गातिभीतो न भङ्गारसं गाहते निर्भरं गालवः स्वस्ति सङ्गायति ॥

[७१]

गन्धर्वीचयचित्रभाजि भवति स्वस्वप्रियप्रत्यया-
दुन्मीलन्त्यमरावतीमृगदृशामुद्दण्डकोलाहलाः ।
कालोर्कायमिति[?]त्वदाहवहतस्वाराज्यभाजोऽपि च
त्वच्छत्रूनपसारयन्ति रभसादुद्भिद्य मोहाङ्कुराः ॥

शोभनश्लोकाः

[७२]

तर्कतरुणतरमुक्तमतिभ्रम अर्कवरुणवरसक्तसुहृत्तम
चिक्कणचलदवलक्षहयक्रम दृक्कणमददरिलक्षजयक्षम
खर्व्वदमरपरर्वाज्जितविभ्रम सर्वसमरवरर्गाज्जितविक्रम
अर्वरमणगमनस्फुरदुद्यम वर्वरमन उदयद्यमसुभ्रम
गर्वगमितरिपुलक्षमदव्रज पर्वतमितविपुलक्षमसद्गज ॥

वीरविरुदम् ॥१५॥

[७३]

परिभज्यति [?]शम्पा गुरुतरकम्पा चम्पा बहु विलपन्ती,
कमता[?]चिरसम्पादितबहुझम्पा पम्पा भुवि निवसन्ती ।
करिवरमिह लोला लयति विलोला...कुलशुभदन्ती,
परिमज्जति कोलाकृतिरपि दोला दोलायितहृदवन्तीः ।
प्रचलन्ति पतङ्गा इव तेलङ्गा भङ्गादपगतवेशं,

कलयन्ति विहङ्गा इव चलदङ्गा बङ्गा वनविनिवेशम् ।
विकलन्ति कलिङ्गा भृशमभिपंगादंगारितनुतापाः,
दधति स्फुटमंगा हिमगिरिगंगासंगाहनमपचापाः ।
जलनिधिरपि तुंगीभवति विहंगी संगी पणवनिनादैः
वनमधि मोरंगी गर्तिजितभृंगी पिंगीभवति विषादैः ।
सुरसमु...कुरंगीदृगपि मृदंगीसंगीतकरसभारं
जनयति रिपुरंगीकृतसुलवंगी भंगी रसमनुवारम् ।
पवनस्य तु पंगोरिव गतिभृंगोरंगोदितगजरोधैः
भवकुञ्चितशृंगो विपुलभुजंगो लङ्को लगति सुयोधैः ।
भवतश्चतुरंगोपहिततुरंगोसङ्कोपितसुविलम्बं
रजसा दिवि संगोपयति पतंगोनंगोपमनिजबिम्बम् ।

कलिकर्णकलिका

[७४]

परजनवञ्चनविमुख सुमुख मम जल्पितमिदमवधेयं
केवल वससि सकलवरतनुहृदि कुत्र कृतिः पठितेयम् ।
यदि खलु धरणिवलयमुषितैरपि मधुरममृतमिह पेयं
साहिजहान सकलनरपतिकुलतिलक चकितमुपगेयम् ॥

[७५]

चालन्या नभसा दिशो मृगदृशो धुन्वन्ति देव द्विषद्-
राजाकीर्तिवितानवर्तुलतुषत्वत्कीर्तिचूर्णच्छटा[ः]।
ऊर्ध्वं भातितमा तमालकुसुमस्तोमानुकारं तुषैः
स्त्यायन्ते भुवि तारकाबिलगलच्चूर्णालयश्चन्द्रिका: ॥

शोभनश्लोकाः

[७६]

क्रुद्धकरशुद्धशरयुद्धजरदङ्कगदलदङ्ग दलवङ्गतरभङ्गभरचण्डचर पण्डपर ।

वीरविरुदम्॥१६॥

[७७]

श्रंगाहितप्रमदरंगाधिपप्रवणलङ्कापतिप्रतिकृत्ते ।
शङ्काशतप्रसरकङ्कालितप्रखरभङ्कारितद्विपगते ॥

[७८]

जय जय रजनिकरमण्डलजिगीषुवदनबिम्बानुबन्धितसन्ध्यानुकारि-मणिकदम्बकानुविद्धमुकुटलमञ्जुलमञ्जुलक्ष्मीवितानवदनचन्द्रलावण्य-सुधास्वादसकुतूहलचिकुरनिकुरम्बराहुवदनावलम्बितमृणालिकारुचि-रचन्दनतिलक तिलकलावण्यचोरणचिराभिस[श]प्तनामिकासमुद्-धृतनिजनिश्वसितामृतनिवहमन्दीकृतगरलगुल्फैकभुजग भुजगरिमख-ण्डितारातिपटलपाटितोदरबहलवेदनानिवेदनश्रवणमूलावलम्बिमि-हिराभिरामकुण्डलयुगल युगलक्षचन्द्रकलानिम्र्माणजनितनैपुण्यविधि-विहितदन्तमाणिकायुगलयन्त्रितरसनेक्षुखण्डताण्डवितवचनरस नर-समूहविस्मापकविलोचनकनीनिकाबिन्दुसुन्दरभ्रु कुटिमण्डलप्रणव-चुम्बितश्रुतिसंगतब्रह्मातिरिक्तसू (शू) न्यताबिन्दुमणिकुण्डलमनोहर मनोहरणसमर्थशोणिमाधरमधुरमध्यरेखिकापरिवाहवाहितदशनरु-चिदग्धप्रपातनिम्नाश्वलचिबुकरुचा रुचिर चारुचिरकोमलकरज-कुसुमसुकुमारकरपल्लवोल्लसितभुजपारिजातविशदशिराभिराम -तनुमसृणकक्षातनूरुहविसरमणीयमनिसरप्राकारितहृदयमन्दिरविरह-मान[ण] पद्मालयासरस्वतीनिह्नुतनासिकाललितलवंगमुकुलायित-

स्तनवलितवलितरङ्ग सरनाभीसरोवरविसरदुरुपरिवाहवलितचरणा-रविन्दविलसदूर्ध्वरेखाजनितनतशत्रुसुन्दरीसीमन्तचिह्नचमत्कार जय महाराज ।।

[७९]

भ्राजद्भालस्थलमणिविदलत्तिमिरारम्भो
राजसि राजजंस्त्रिपुरसमाजप्रतिहतशम्भो ।।

कलिकर्णकलिका

[८०]

जागर्त्ति त्रिजगत्किरीट भवतस्ती(स्ति)र्यक्करामर्शन-
व्याख्यातप्रतिवीरवर्गविगतिर्गुम्फोऽयमुद्गुम्फितः ।
दन्तोद्योतशरान्विताधरपुटीपर्य्यन्तरेखागुण-
व्याकृष्टं वदनेन्दुनेव चिकुरध्वान्तेषु धन्यं धनुः ।।

[८१]

मघर्म्मबिन्दुबिन्दुमत्यहो भवन्तमन्तरा,
तनोरमाधुरीमंनोरमा धुरीण शङ्कते ।
त्वयि श्रुते मदालसा हृदालसायते हरेः
करोति सङ्गमेन कारमंग मेनका रहः ।।

[८२]

उत्कण्ठावत्कलावत्यनुनयवचनादुर्व्वशी सर्व्वशील-
त्यागात्पत्रोपरित्रोटितमदनमद त्वां विधिर्व्यालिलेख ।
नन्दासुन्दाम धत्ते लिखति मकरिकां हृत्तले चित्रलेखा
रम्भालम्भावमङ्गैर्विरचयति घृताची तु साचीङ्गितानि ।।

शोभनश्लोकाः

[८३]

ललितलयलोल त्रितचोल गुरुगगनगोल रचितरणरोल कटु-
करकपोलकरिकसितकोल द्रवदवनिदोलमव नवनिचोल ॥

वीरविरुदम् ॥१७॥

[ ८४ ]

खञ्जरीटदृग्विसा(शा)ल पिञ्जरीकृतैकभाल सञ्जरीहरीषि बालमञ्जरीमदं भ्रु वाऽऽलपिञ्जरीकृतोरुमाल गुञ्जरीगरिष्ठताल कुञ्जरीयदन्तजालपुञ्जरीतिसद्यशाः, अङ्गनादृगन्तवृत्तबङ्गनायकप्रदत्तटङ्कनाधिराजनृत्यबगङ्नापतद्भटः, तुगनागयूथराजदङ्गनासिताहिराजसङ्गनागरीसमाजरंगनाटिकानटः, सासिनीलदृक्तरङ्गरामणीयकप्रसङ्गवामनीकृतैकभृङ्गधामनीरजाकृतिः, कामिनीविराजदङ्गयामिनीविलासिरङ्गगामिनी तव त्वनङ्गनामिनीमुखद्युतिः, कुण्डलीशबाहुपाशकुण्डलीनभाहुताशमण्डलीयहोमराशितण्डुलीयभद्रिपो, दण्डली च सर्वदेशचण्डलीनभूसुरेश कुण्डीभवद्धयेशमण्डलीपरप्रभो, त्वं त्वरापदृष्टिराग इन्दुराजदङ्गरागबिन्दुराजिभालभाग मन्दुराजितार्णवः, कुन्दराजिदन्तलेख तुन्दराजितत्रिरेखसुन्दराजितप्रवेषसुन्दरावनप्रभः, मन्दराद्यवोपमानमन्दराचलप्रधानकन्दरातरुप्रतानकन्दरागिरैरवानबन्दिराजिराजमानमन्दिराहिताभिमान इन्दिरामहावितानतुन्दिलीसकृद् भवान् ॥

कलिकर्णकलिका

[ ८५ ]

अथासमरसङ्गते समरसङ्गते त्वय्यति
स्फुटाननविभीषणे(ऽ)ननविभीषणेष्टप्रिया: ।

विलम्बिपुलकानना विपुलकाननान्तत्रुट-
न्मनोरमनवालका रमणवालकान् मुञ्चति ।।

[ ८६ ]

स्फारनाटितप्रवाल हारनामितैकनाल धारणास्यपद्मबाल भावनालभृङ्गमाल सारणानुजैकताल तारनागहस्तशाल हारिणा भुजेन पाल पारणापतन्नृपाल मारणाभिकुप्त(?)काल आरनालसद्विकालपारनाभिभूतबाल तारनादशत्रुभालदारणासिभिन्दिपाल धारणाकपृष्ठपाल चारणानिगीततालकारणानुभावजाल तारणाविधौ कृपालवारणावि (व?) लीविशाल सारनागरीरसाल ।।

[ ८७ ]

भूमि(मी)न्दो भवता सह व्यसनतो ये गोतमत्वं गता
दुर्व्वासःपदवीं विलुण्ठनपरैर्नीतास्त्वमग्रेसरैः ।
ये वेलासिकताभरेण कपिलीभावं भजन्ति द्विषो
ब्रह्मण्यः किमिह स्तुतोऽसि बहुशस्त्वं तावयं तानपि ।।

शोभनश्लोकाः

[ ८८ ]

जय रणशीरधरध्वनिकीर जय वनचीरधरप्रतिवीर,
जय नदतीरकृतारिकुटीर जय सुशरीर जगत्यशरीर,
जय जितनीरधिनित्यगभीर जय परवीरणाकम्पशरीर,
जय पदवीरतभूभृदवीर जय वरवीर निरन्तरधीर
जय करवीरमनोहरहीर ।।

वीरविरुदम् ।।१८।।

[ ८९ ]

यामिनीपतिवदन कामिनीरतिसदन वामनीकृतमदन भ्रामिनीकृतकदन भामिनीवशक गजगामिनीरसिक वसुधामणीतिलक बहुरामणीयकजनक रामनीरतहृदय नामनीरवमलय धामनीरितशयन वामनीलिमनयन सामनीहितहृदय रामनीरधिसदय सामिनीलितकुसुम दामनीङ्गतमधुप भ्रामनीरसित वलिवामनीभवसि परिणामिनीमवसि मतिसामिनीषितरसिक स्वामिनीहित समरगामिनीवयतिपरभ्रामनीमिषुमनपगामिनीभवसि नृपसामिनीमतिरुचितमामिणीसहितनृतकामनीकृतविमतकामनीरचितरत कामनीयभवन रामनीरदपवन ॥

कलिकर्णकलिका

[ ९० ]

जय जय भुजबलवलितबहुविक्रमशमनकराल,
कुजनसमीरणसंविदारणसर्प्पितकरवाल ।
रणसर्प्पितकरवाल मिहिरमन्दीकृतकैरव,
सङ्गरचितकरकोपलिप्तदिग्गणरणभैरव ।
सङ्गरचितकटकोपचलितदन्तावलसञ्चय,
शरपविचरणविवर्णकर्णकुरुराजधनञ्जय ।
विन्दति गिरिपरिरम्भसय[?]मम्बुधिरधिकभियेव,
कमलिनिदलजलबिन्दुरिव चलति साहजगदेव ।
चलति साहजगदेव कटकजलधौ तव गर्ज्जति,
फुल्लति फणिपतिरङ्गतुङ्गकमठोऽपि निमज्जति ।
फुल्लति फणिपतिवङ्गमौलितलमौलिकृतस्थिति,
सहितर जय शतपत्रपत्रतोरणमनुविन्दति ॥

[ ६१ ]

भूप भ्रास्य(म्य)ति यं प्रति प्रतिगृहप्रारब्धपद्मालया
शैलूषीलयसूत्रधारमधुरो युष्मत्कटाक्षाङ्कुरः ।
तत्प्रासादविलोकनाद् विकुरुते विन्ध्याचलो ग्रीविकां
सम्भूतभ्रमसम्भ्रमेण भगवानम्भोजिनीवल्लभः ॥

शोभनश्लोकाः

[ ६२ ]

जय गंगाधरभावनभावन जय भृंगाभक्तपावनपावन
जय दुर्गापरधारणधारण जय वंगादिविरावणरावण
जय सभ्रामविसारणसारण जय श्रृंगारविचारणचारण
जय तुंगाहितवारणवारण जय रंगाबहुधारणधारण
जय बंगामविकारणकारण जय संगाटसदारणदारण

**वीरविरुदम्** ॥१६॥

[ ६३ ]

जय जय मुग्धलावण्यसागर जगदेकनागर महाराज तव चिकुर-शोभया विजितमभितो मया घनशिखिशिखि[ख]ण्डनिकुरम्ब तदव जय मोहितो नवजलदजन्मतो वहति सहिनटनमविलम्ब मणिकिरणसुरेन्दरेतर [व] हृदयमन्दिरे वसति कमलेदमरविन्दं भवति भवदाननं गलितशशिभाननं चलितमृदुभालतमकरन्दं उदयदलिवासनं भ्रुकुटिविशिखासनं तव नयनकोणगुणसारं वहति कुसुमायुधो मुग्धमिह नासिकातिकुसुमसायकमुदारं तव नयनखञ्जनं नियमयतु मञ्जसा समतनुत कुण्डलमुपाशं विधिरनि-(लि ?)कचन्दनाचारित बहुविन्दनासविधकृततण्डुलविकाशं

विमलमिदमानने वलति रदनद्वयं पर्णरसनसदपरदन्तैः किमु कमल-लालितं हिमकरकलायुगं वृतमरुणभानुभिरलं तैः जननयनदोलकौ तव नवकपोलकौ मदनमणिमुकुरसमनिपिहितचिबुकस्थलीदशनरुचिमण्डली वहति मणिदण्डमहिमानं कण्ठ इहमबन्धुरालपितमधुसिन्धुरावहति तव वीचिवलिभरेखाः मुकुटरविदारितश्रवणपुटशुक्तिका चलति रदमौक्तिकविशेषाः ॥

कलिकर्णकलिका

[ ९४ ]

विद्युन्मालालीलाभाजौ राजन्नाजौ युष्मद्बाणाः ।
गत्वा गर्ज्जन्मातंगाली काली पालीमालीयन्ते ॥

[ ९५ ]

जय जय गगनगहन हयचयचलदलक सकलनय नयनतते
सरसरदनघननगनकदन गजगदन गरणधर दहनहते ।
सरलसरलतरतरण जलजदलजयननयन लसदलसगते
चरणशरणनरतरणकरण जलकरणहरणशरधरणवते ॥

[ ९६ ]

आपूर्योदरमाशु, खण्डपरशो [:]प्रव्यक्तमुद्भिद्यते
भालाक्षीक्षणतो धराधर भवच्चापप्रतापाङ्कुरः ।
जज्वालाजटिलो जहाति न मनाक् प्रालेयशैलोद्भवा-
गाढाश्लेषतुषारभानुसकलस्वर्ल्लोककल्लोलिनीः ॥

शोभनश्लोकाः

[ ६७ ]

जय जय मर्त्यमुकुट हयनृत्यसुवन्धुर ।
जय करखर्व्वतपनवरपर्व्वतसिन्धुर ।
जय रिपुसङ्घविपुलगर्जसिंहवन्धुर ।
जय भुवि हारविहितसुविहार सुकन्धर ।
जय हृतलक्षधरणिधरपक्षपुरन्दर ।
जय परिपन्थिजलधि परिमन्थसि मन्दर ।
जय वरसद्मरुचिरतरपद्मवदिन्दिर ।
जय वरकुन्दरसिकभरसुन्दरमन्दिर ।
जय वरनागतरल[त्न?]शरणागतपञ्जर ।
जय शिरसीह निहिततुलसीतरुमञ्जर ॥

वीरविरुदम् ॥२०॥

[ ६८ ]

खलीलसंगमप्रसंगमर्दितावनीतलाः
कशाधिरोपन[ण]प्रकोपनर्तनैधशीतलाः ।
महासरित्तरंगनृत्यरंगदारितद्विषः
प्रकम्प्रवालधिप्रवालधिक्कृतारुणद्विषः ॥
वियद्विहारपण्डितद्विष[ख]ण्डितक्षपाकराः
सुपक्षकुन्तवच्छकुन्तवल्लभत्रपाकराः ।
वलक्षकेशवक्षपेशरश्मिगर्व्वमोचनाः
मरन्दपिच्छलीभवच्छिलीमुखाभलोचना ॥
अलोलकर्णशुक्तिकानिरुक्तकायशुद्धता-
स्त्रुटद्भुजंगवासमुद्रमासमुद्रमुद्धताः ।
समस्तराजमस्तराजमानरत्नवासरा-

धिराजबाहवो महाहवोपनद्धकन्धराः ।।
मरुत्तुलाभिपापवर्त्तुलानुतापधारिणः
सुलोह्वद्धटापसद्घटावलम्बकारिणः ।
पतस्यनौ समीभवत्यमी भवत्तुरंगमाः
सृजन्ति कन्धरामतिं धरा इवैकजंगमाः ।।

कलिकर्णकलिका

[ ९९ ]

अमित्रोदयत्रोटकाखेदभारैर्भवद्घोटका भूमिविस्फोटकाभाः
समीरापमानादमी राजमानास्तमोराजमानामयन्ति स्वपत्याम् ।
अदृश्या मुहुः शान्तयतः परागं तवामी शरा मीनकेतोरिवाश्वाः
श्मृशतो(न्तो)दिवं तोरणं तोलयन्तो व्रजन्तोऽनिलंतोह्वयन्तो जगन्ति ।।

[ १०० ]

नटन्त इव सुच्छविस्फुरितपुच्छविस्फारणैः
प्रसन्नशशभृच्छिलासहजपिच्छिलांगद्विषः ।
अमी रणवसुन्धरामधि समीरणप्रक्रमाः
क्षमाधरतुरंगमा मम तु रंगमातन्वते ।।

शोभनश्लोकाः

[ १०१ ]

सुवचनमलिनदलिनमकरन्द हिमरुचिहिमरुचिहसितमरन्द
गुणगणसदनवदनघनकुन्द तपदपरुजभुजमरकतकुन्द

प्रतिरथजलनिधिमथनमुकुन्द अविरतरणवितरणमुचुकुन्द
वदनविजितवरशरदरविन्द करतलचिरतलक्कृतकुरुविन्द
समदयसुतवरकरटिकलिन्द नृपतिमुकुटशतसतलिदलिन्द ॥

वीरविरुदम् ॥२१॥

[ १०२ ]

नृत्यदमरभृत्यडमरनृत्यसमरमण्डला-
श्चित्तगमनदत्तशमनवित्तरमणदण्डनाः ।
तत्तदमलवृत्तापटलवृत्तसकलखण्डनाः
क्रुद्धचरणशुद्धमुशलयुद्धकुशलकण्डनाः ॥
सर्वललितगर्वगलितखर्वदलितसद्भटाः
स्तव्यकलितभव्यचलितनव्यतलित उद्भटाः ।
कम्पतलितसम्पललितचम्पललितलम्पटाः
सम्पदवनझम्पजवनकम्पिभुवनसम्पुटाः ॥
श्रृंगचरणरिंगदरणभुङ्गतरुणजंगमाः
संगिसुपुरभंगिमुखरतुंगशिखरसंगमाः ॥
त्वंगदमितटंगदमितभुंगनतभुजंगमाः
अंग दधति रंगमुंदयदङ्गतरतुरंगमाः ॥

कलिकर्णकलिका

[ १०३ ]

स्फुटफेनमिषेण भवत्तुरणो(गो?)रमतीव विशुद्धमतीवयशः ।
खुरकुट्टितभूरथमूमितलं मृशतीव समीरतुलार्पणतः ॥

[ १०४ ]

कमठपतिर्धर्लफलति दलति कुञ्चति परिमीलति
भुजपद्मवाहकहकहकहति हन्त हालाहलमुज्झति;
जलधिजलं खलखलति मन्तमर्द्दनमनुविन्दति
रविरपि धरणिरजोभिरेष यामिन्यरविन्दति,
त्वयि तुङ्गतुरङ्गमरणजुषि धीरधरणिरपि धमधमति
पातालसमुल्लानबहलजलमखिलभुवनमपि सिमसिमति ॥

[ १०५ ]

चत्वारोऽपि चतुर्द्दिगन्तगहनप्राकारपारङ्गमाः
श्रीखण्डैरभिमण्डिता भगवता निर्णीतमस्याङ्घ्रयः ।
मद्वै [त्वै?] तान् पुनरन्यघोटकघटासाध(धा)रणानुच्चकैः
पुण्याधारललाटके तिलकितस्त्वत्पञ्चकल्याणराट् ॥

शोभनश्लोकाः

[ १०६ ]

सन्दलितकास कन्दलितहास तुन्दलितरास सुन्दरितनास मन्दरितवास कुन्दकृतवास कन्दरनिवास मन्दकृकलास वृन्दसविलास नन्दसुतलास ॥

वीरविरुदम् ॥२२॥

[ १०७ ]

किसलयकञ्जारुणकर खरशरखञ्जायितपर गजवरगञ्जामुखरमधुव्रत सुव्रत जय जय ललितराजप्रशस्तिपञ्जिकाविराजमान महाराजकुलतिलक जय, आज्ञालङ्केश राज्ञामङ्केश कामनाकल्पवृक्ष नामनाशितविपक्ष शरणागतवज्रपञ्जर चरणानतराजकुञ्जर

शालग्रामशिलापवित्र महिपालग्रामकलालवित्र रोपरुद्रावतार कोषमुद्रावहार प्रतिष्ठापूरणपरशुराम प्रतिज्ञातपूरणपरशुराम अभिमानदुर्योधन अरियानपुरयोधन साहसैकमल्ल परदाहकैकभल्ल सतिमिरपुञ्जक्षितिधरगुरुतर कुञ्जस्थितिपर करिवरगुञ्जन्म[धु]करनादरसादर ॥

कलिकर्णकलिका

[ १०८ ]

स्वमते रमते भवता जनता वलते किल ते कमला विमला ।
तनुषे ननु खे विशिखाग्निशिखां त्वमुदारमुदा परितः स्फुरितः ॥
जय वीरवर स्फुटधीरतर त्वमनङ्गरमः परभङ्गयमः ।
अवदातवती तवता जगती कुरुषे युवतीः स्मरखेदवतीः ॥

[ १०९ ]

स्फाराः कुण्डलिनः स्फुरन्ति परितः सिंहासनारोहण-
व्यापाराः प्रसरन्ति भान्ति चमरीपुच्छावघातक्रियाः ।
किञ्चान्यद् गिरिराजगव्हरजुषोऽप्येकाकिनस्त्वद्रिपो-
रुन्मीलन्ति पुरेव मत्तमहिषीदृप्यत्कटाक्षच्छटाः ॥

शोभनश्लोकाः

[ ११० ]

आजिसप्त राजितप्त वीरदृप्त हीरलिप्त शोकमुक्त लोकयुक्तरङ्गरक्त सङ्गसक्त ।

वीरविरुदम् ॥२३॥

[ १११ ]

जय जय कामप्रतिमनिकामद्रविणसुपूरितपुरुषनिकाम,
जय रणरामभ्रमदभिरामभृकुटिवशीभवदुन्मदराम ।
जय रिपुजालस्फुटमृगजालस्वपुरवधूमुखमण्डितजाल,
जय करवालप्रथितप्रवालस्फुरदधरक्षणचुम्बितबाल ।
जय सुमृणालस्मितसुघृणालक्षितभुजनिर्ज्जितनोरजनाल ।
जय बहुकालध्वनदन्तिकालद्विरदघटाघनदुर्ज्जनकाल ।
जय महिपालप्रणतिकृपालद्विदलितसर्वसगर्वकपाल,
जय रणतालध्वजकरतालप्रणयसलीलचलद्भुजताल ।
जय नतमालप्रचुरतमालप्रतिभटकेशनिवेशितमाल,
जय भुवि शालप्रथितविशालद्युतिभुजघोरघनच्छविशाल ।
जय सदरालभृकुटिकरालक्वणितविनिर्ज्जितमत्तमृणाल,
जय सुरसालक्षितिसुरसालसुर[?]लसन्मदनासुरसाल ।।

कलिकर्णकलिका

[ ११२ ]

भवदमलगण्डगगनतलचण्डधनुरमृतभानुशकलमहसानु
ग्रहितनयनानि शशभृदुपलानि सपदि विलसन्ति बहलजलवन्ति,
जय चलमलिन्दकरिजितकलिन्दपरितलसदलिन्द नमदरिपुलिन्द
विकसदरविन्दचरणकुरुविन्दनृपकुशलवृन्दमनिशमनुविन्द ।।

[ ११३ ]

कण्ठे घण्टेव देवः कुमुदसुहृदयस्स्वर्धुनीमूर्द्धनीह
क्रामन्ती चामरत्वं रचयति रचनाभारवत्तारकौघः ।
मौलौ सिन्दूरबिन्दूभवति कमलिनीबन्धुरेष त्वदीयो
राजन्नाजन्मभूषामनुभवति नभःपञ्जरे पञ्जरेन्द्रः ।।

शोभनश्लोकाः

[ ११४ ]

सर्वदैव राजलोकगर्वशैवलानि कोकसेवनागतत्रिलोक देवनागपत्रिमोकदम्भवच्छरीररोग सम्भवत्तदीयशोक ।।

वीरविरुदम् ।।२४।।

[ ११५ ]

जय भूमिभूषणवदनपङ्कजहसितकोमलकेसर-
व्रजमिलितमत्तविलासिनीनयनालिभृङ्गतते ।
जय सन्तती[?]भवदवनिवल्लभमौलिकोटिकिरीट
दुर्ल्लभनीलरत्नसमुल्लिखन्नखचन्द्रचिह्नकृते ।
जय युद्धमेदिनिजनितचङ्क्रम राहुदर्पसमुद्र-
संक्रमसत्कृपाणसुखाभिसारिजगद्रमायुवते ।
जय दानवारिविवृद्धसागर जनितनव्ययशोनिशाकर
सम्पुटद्बलिकर्णकीर्तिसरोजशुद्धमते ।
जय सुन्दर द्विषदृष्टवारणपुण्डरीकनिकायदारण
विशिखशीतपरीतमु[?]कार्मुकमण्डलोडुपते ।
जय सर्वशत्रुकलत्रकुन्तलनद्धलोहितहस्तमण्डल-
सम्भवत्तिमिराधिरूढनवारुणोपमिते ।

कलिकर्णंकलिका

[ ११६ ]

जय सद्गुणसिन्धो बहुजनबन्धो बन्धोपनतनृपतिनिचय
जय निर्भरमन्दारकमलरन्दारनन्दारचनरचनविनय ।
जय विक्रमसन्त्रोटितरिपुतन्तो सन्तोषितजनजनितनय ।
जय सुन्दररम्भावति परिम्भालम्भावुक जय नयविलय ।

युधि कुन्तकृपाणौ सरुधिरपाणौ पाणौ तरचिद्वमति वहति
परपत्तनलोका हरिहरि लोकालोकाचलगतिमुपदधति ।
अपि चञ्चलकालीभवदलकाली काली परिगतसुरयुवति
परितः करतालीजनितरुतालीतालीदलरुचिरिह नर्टति ॥

[ ११७ ]

दावाग्निर्नैव शारावधि शमितरिपुस्त्रैणदृग्बाणवृ(ब?) द्धो
दम्भोलिर्नायमम्भोनिधिवनवसि[स?]तिक्षोणिभिःक्षोभदक्षः ।
नार्कः कार्कश्यमञ्चन् परभुजविटपच्छाययाप्यां(?) प्रतीमः
प्रौढाहङ्कारलङ्कारमणघन भवद्वाहटापप्रतापः ॥

शोभनश्लोकाः

[११८]

जय विहसदङ्गनप्रचुर विमदङ्गनस्फुरितवरटङ्गनस्फुटघटित-रिंगन ॥

वीरविरुदम् ॥२५॥

[११९]

अवनतजम्भालम्भावन विहसितरम्भालम्भन गुरुतरदम्भालम्भणनामृतभावित जय जय निजवृत्तगन्धविस्मापितत्रिलोकलोकपालप्रभाव जय लोचनाञ्चलविकाशतः क्रि(कृ)तार्थीक्रियतामुदारदारुणान्धकारकवलितक्रोडपर्य्यन्तपरिखापदेशेन सकलजनचित्तवित्तापहारनिबन्धनं बन्धनमिवासादिता विरञ्चिविज्ञानविदूषकेण भवता बाहुशिफसम्भवेन सृष्ट्वाऽपि कष्टात् स्वपर्वसार्वभौमारचर्य्यमाणचिबुकलाग्नेन मसीभिरभिकुण्डलितासौधस्फुरद्भवनभित्तिगवाक्षमण्डलाननविनिर्यदङ्गनागणमृदङ्गगुड्गुमेन चलितकेतुकर्पटकराभ्रमाहूतपुरहूतपत्तना मनोभवोन्मत्तविदग्धकामिनी

केलिकर्पूरपूरपांशुकदम्बडम्बरितमम्बरागणमलिन (निल) मन्दसन्दोलितध्वजवसनवर्द्धिनीभिरुपस्कुर्वती निजवल्लभदुर्लभानि रत्नानि यत्नादन्वेष्टुमागामिनीभिरिव समुद्रगामिनीभिः समन्ततोऽपि प्रणालिकाभिर(रा?)कालिकाम्बुसंवर्षणा क्वचिदिन्द्रनीलमणिशीलनेन सरसाभिसारिकानिकरसौभाग्यसम्पदे कुहूमहोत्सवमवतारयन्ति क्वापि च व्यापिचन्द्रावतदातसौधसंहतिचमत्कारेण चकोरचक्रवालरसनचातुरीपरोक्षणीयविशेषां राकामाकारयन्ति समस्तहरिदङ्गनाभरणरत्नशृङ्गाटकेयमागरा । बालाभालावति तिलकाला बालासित कित पालाजालानिलचलितालालक ।

**कलिकर्णकलिका**

[ १२० ]

मणीभिरत्र यामिनी विदूरगामिनी कृता
यदीशितापि जापितोति भङ्गमङ्नामुखैः ।
प्रभाभिरुल्लसत्तृणा पतत्रिनायकाश्मनः
इयं विवस्वदर्वणामलीकचर्वणाकरो ॥

[ १२१ ]

अङ्गैर्गाङ्गेयभङ्गैस्समरसहचरीबालवेशैश्च केशैर्द्दन्तैर्मुक्तालिकान्तैः स्फुटमधर···द्योतजालैः प्रवालैः ।
हेमाम्भोजैरुरोजैर्बहुविषयमयीमात्मनैव द्वितीयां
हट्टामट्टालकस्थाः कमलदलदृशस्त्वत्करे कल्पयन्ति ॥

**शोभनश्लोकाः**

[ १२२ ]

भालासितमुखभालासितमुख मालापितपरमालापितपर
बालारुणकरवालारुणकर ।

**वीरविरुदम् ॥२६॥**

[ १२३ ]

अथ पिञ्जरीकृतमञ्जरीविचलत्कशातकुलकामिभिः[?]
सरसा रसा[ल]कुलैरलं बकुलैश्च विभ्रमगामिभिः [?]।
अलिरङ्कलक्षणसंकुलक्षणदाकरायतपुष्करैः
अवलम्बितद्युतिप्रतिबिम्बरम्यसरःकुलैः [?]।।
स्फटिकांशुभूतिविसर्प्पणस्फुरदग्रदर्पणमण्डला
मणिहर्म्यपालिकपोललालितभानुमद्विधुकुण्डला ।
कनकानुविद्धघनीभवद्धरिनीलसौधर(व?)दम्बरा
सतलिङ्घनभ्रमपूरमत्तमयूरनर्त्तनडम्बरा ।।
प्रसरत्ययःकणचारुचक्कणकुम्भकुञ्जरजातिनि—
र्ध्वनिता घनैरिव हट्टभैरवधूलिपूरणपातिभिः ।
दिवसक्षपाहटदनेकरत्नकपाटकूजितलम्भिता[?]
किमु कुम्भिकर्णनवीनवृन्तकवीजना सुखजृम्भिता ।।
मणिदस्युनीतम[न]स्विनीकथकैककैरवजागरा
चेलकेतुकर्पटपङ्कलम्पटपण्यचत्वरसागरा ।
नवगानगुञ्जितकिन्नरीतनतन्नवीरसनागरा
परपातिसाह विभाति साहसमल्लपूरियमागरा ।।

**कलिकर्णकलिका**

[ १२४ ]

अत्र सुन्दरीजनेन मल्लिकावलिभ्रमेण चीयते हि तावकालि-रञ्जताधिसौधपालि इन्दुरङ्करुद्रहेमगोपुरागतश्चिरेण दावहव्य-वाहभोतिचञ्चलोऽभिचाकसीति एष मासि मासि देव भाति भङ्गुरोर(ऽ)त एव तुन्दिसञ्चिता सुधेति भूयशः प्ररोह्मेति ।।

[ १२५ ]

मुग्धापत्राणि मत्रालिकमधिवसुधा संविधाय स्पृशन्ति
क्रीडासौधे सुधांशुं कलितकरतलामर्शमादर्शबोधात् ।
अद्यापि द्रागुदीते शशभृति निभृतस्वामृतानामहिम्ना
दीर्घायुस्त(स्ता?)दृगम्भोरुहयुगलवलत्कज्जलस्यानुबिम्बः[?] ॥

शोभनश्लोकाः

[ १२६ ]

जय परचन्दन नयतरुनन्दन धृतहरिवन्दन नतहरिचन्दन वरकरिविन्दन परपरिनिन्दन जगदभिनन्दन जितरघुनन्दन कृतरिपुक्र(क?)न्दन भियमिह विन्दन ॥

वीरविरुदम् ॥२७॥

[ १२७ ]

स्कन्दाधिकबल मन्दायितनल सन्दारितपर टङ्गनरिङ्गन
कुन्दाकलितमरन्दात्रलितरुकन्दाधि स्वयशोधनशोधन ।
वृन्दावनगतिसन्दानितमतिमन्दात्मजभावनपावन
इन्दाविह किल सन्दापिततुलकन्दाशयसि युदधतउद्धत ॥
विन्दादपि अनुविन्दादपि मुचुकुन्दादपि समिदङ्गनरिङ्गन
सुन्दादपि उपसुन्दादपिस्त्र(?)मुकुन्दादपि रणपण्डितमण्डित ।
मन्दानिलरतमन्दातिथिशतमन्दाकिनिकृतमज्जनसज्जन
वृन्दारुकवरवन्दारुकतर कं दारयसि न सद्भटमुद्भट ॥
स्यन्दानतमकरन्दापतदरविन्दाकुलशरशी(सी)तलशीतल
क्रन्दाकुलरिपुसन्दाहनिपुण बिन्दावपि न समस्तव सस्तव ।
वृन्दारुणरणमन्दारकधन सन्दामयसि परं जनरञ्जन

स्यन्दालसकरिवृन्दाभिनवकलिन्दानतकर सूरज सूरज ॥
तुन्दानतकुरुविन्दायितकरकुन्दायतभुजसिन्धुरकन्धर
निन्दारहितपुलिन्दाधतिकधतिन्दाविति सूरजक्कणचिक्कण ।
मन्दाकिमलकनन्दानक्नकसन्दायशशातवसानव
नन्दानयनमलिन्दाटविसमसन्दाहितकुजनालय पालय ॥
नन्दारतिलसदलिन्दावनतसनन्दाधिकमुनियाजनभाजन
विन्दाधिकशिवमिन्द्रादपि नवनन्दाधिकजनवन्दितनन्दित ।
सुन्दासमिव न कन्दानवमिह चन्द्रानन कुरुषे चितरेचित
सन्दानय द्युतिनकन्दामनिजलवृन्दावपि तृषितं नृपतिं नृप ॥

कलिकर्णकलिका

[ १२८ ]

तव नृत्यति नृत्यमधोमुकुलत्करवारिरुहं तरवारितमः
स्फुटमप्सरसामभिसारमतः क्षितिवल्लभ ते रमतेऽरिभटः ।
बहुशो बहुशो भरणाभरणायितरङ्गतरङ्गमुदग्रहयः
भ्रमसि त्वमसि स्फुटबाहुमुखाहुतराजतराजकिरीटविधुः ॥

[ १२९ ]

नीतं सिंहासनं चेदपहृतमचिराच्चामरं चातपत्रं
का हानिः पातिसाहान्वयतिलक तव द्वेषिणां प्रादुरासीत् ।
आसीनाः शैलशृङ्गोपरि सरिदमलस्रोतसा वीज्यमाना-
स्ते सद्यः स्त्रासपाणाकुलितफणिफणच्छायमह्नाय भेजुः ॥

शोभनश्लोकाः

[ १३० ]

कालानलकटकालार्रविकटकाला गुरुतिलकासित किल कालादपि बहुकालाधिकश शुकालापनकनकालासितजनकालाघव-घटकालानितघट ॥

वीरविरुदम् ॥२८॥

[ १३१ ]

मदिरारसपानसुविक्रियमानसरोजसमानदृगन्तधराः
स्फुटनग्रसमग्रपिस(ष)ङ्गिमसम्मतगुम्फविगुम्फनलोलकराः ।
सरलीभदृढतवनू(?)रुहराजिविराजितनिर्म्मलगण्डयुगाः
परितोऽपि तरङ्गितभृङ्गकदम्बकचुम्बितचारुसरोजमुखाः ॥
श्रुतिसीमनिखातशिखावनमुद्गरभुग्नितकुन्तलवद्धपटाः
पृथिवीधरदुर्द्धरकन्धरसीमसमिद्धसमिद्धतशत्रुभटाः ।
मुखसेवनमेचकचन्द्रचमत्कृतपृष्ठविलम्बितचर्मधराः
किमु कृद्यमुखद्युतिदीपतलस्थलगूढसमूढतमःप्रकराः ॥
रणवर्तितशत्रुकदम्बकनाकुनिरङ्कुशकुण्डलिकुन्तयुता-
स्त्रिकबद्धसमुद्धतराजशिरोरसमत्तनसत्तरवारिलताः ।
मुदितेशनिदेशवचोयमजोक्तजीवनदुष्करकर्मगणा-
स्तव भूप चिरादनुरूपतरा विलसन्ति दुरन्तपदातिजनाः ॥

कलिकर्णकलिका

[ १३२ ]

प्रलयानलकीला खरतरशीला लीलावति नयनत्वरिता
प्रसरद्रणकर्मठचिक्कणचर्मठणत्कृतशत्रुशरस्फुरिताः ।

समरोदधिकंका गुरुतरलङ्काहङ्कारत्रुटितघनाः
प्रचलन्ति विशङ्कममी यमकिङ्करमत्तमहोपतिपत्तिगणाः ॥

[ १३३ ]

चेतांसीव दृगन्तचङ्क्रमकृतः कान्तादृगन्ता इव
द्रागामूढपराः शरा इव समित्यग्रे कृतस्वाननाः ।
शौर्यालङ्कृतयो निजप्रभुमनोदृक्सूत्रसञ्चारिणः
स्वामिन्नभ्रपदातयस्तव कथङ्कारं गिरां गोचराः ॥

[ १३४ ]

रङ्गितरङ्गितदृक्कमले कमलेस(श)पदप्रथितावनतौ वनतौल्यगतारिकदम्बपुरे वपुरेधितविभ्रमपञ्चशरे च शरेण वशीकृतसर्वनरे वनरेचितशत्रुकुरङ्गगणे गगणेऽपि लसद्वरवाजिविलासे लासविशेषमदप्रमदे प्रमदेभसमुल्लसमानगतौ नगतौल्यसलज्जभुजाभुजगे भुजगेष्टतराङ्गदचारुरुचौ रुरुचौरविलासवलन्नयने नयनेत्रविलोकितलोकमते कमतेशवलद्धुजदर्पविकाशे काशविसर्पियशःपटलीपटलीनसमस्तहरिन्महिले महिलेपितविप्रियवृन्दवसे दवसेवनविज्ञनीहरिपौ हरिपौरुषविन्दिभुजायुगलोयुगलीढनरेस(श)वृषालिमदे(ऽ)लिमदेकसुतुङ्गमदङ्गविहारे हारविनिर्मितसत्परिवेषसुवेषसुधानिधिशोभिमुखेऽभिमुखे बहुयाचकदेवतरौ बत रौद्रविलासकलागिरिशे गिरिशेषरनिष्ठुरकामधुरामधुरापरिरम्भमहारसिकोरसिको न नतस्त्वयि दिग्गजसारे ॥

शोभनश्लोकाः

[ १३५ ]

सुविशदवदनविनिन्दितहिमकर मलयजरसरुचिमन्दितहिमकर हरिपरिचरणविलम्बितमुनिवर अवनिपनिकरकरम्बितपरिकर

कुलजलनिधिजलमण्डलशशधर मणिविनिहितरुचिकुण्डलवरधर
रयमयतुरगतरङ्गितखुरपुर मतिविमलिमचिरचङ्गिमसुमधुर
विलपितलासितभटीकृतरतिभर सतिमिरकुहरकुटीगतनिजपर ॥

वीरविरुदम् ॥२९॥

[ १३६ ]

जय जयोद्दालसिंहविक्रीडमत्तमातङ्गखेलितकुसुमस्तबकदामवितानवर्तुलाचलचण्डललितकामबाणाशोकमञ्जर्यनङ्गशेखरभुजङ्गविलासमेघमालाख्यचण्डवेगसिंहविक्रान्तप्रचितकचण्डकीलचण्डवृष्टिप्रपाताण्णर्णिर्णवव्यालजीमूतलीलाकरोद्दामशङ्खार्कचन्द्रेशभोगीन्द्रपीयूषवाराहवातपन्नगेन्द्रदम्भोलिहेलावतीमालतीकेलिकङ्केल्लिलीलाविलासप्रमुखदण्डकद्योतितप्रताप ।

जय जय तगणातिरस्कारिवर्णत्रयोपरिसप्तदशवर्णावधिकसाधारणसहितपुरुषोत्तमतिलकाच्युतवर्द्धितरवीरभद्रसाकमातङ्गखेलितोत्पलगुणवति कल्पद्रुमकन्दलितापराजितयति नर्तनतरत्समस्तवेष्टनास्खलितपल्लवित समग्रतुरगात्मकविरुदविशङ्कवर्णनीयानुभाव ।

जय दिगावादिमादिनादिगानादिविश्रामध्याद्विभङ्गीत्रिभङ्गीसङ्गीतगुणतया पारिजात इव नवकलिकाभिराम ।

जय जय विदग्धतुरगद्यपद्यहरिणप्लुतनर्तकभुजगवल्गिताललितायुगभेदिता द्विपदत्रिगतावरतनुच्छविमुग्धामध्याप्रगल्भाशिथिलामधुरातरुणिषड्भेदितद्विपादिकामयत्रिभङ्गिप्रपञ्चसञ्चारितगुणग्रामसामन्तचक्रचूडामणिमुषितसिंहासनक्रोडकुञ्चितान्धकार ।

जय जय महाराज एकैककलिकाश्लोकविरुदात्मकत्रिकरचितविरुदावलीनिबद्धोलपनभवद्गुणाम्भोधिपुञ्जपारञ्जिगमिषव [?] क इव न लज्जते महाकविः । यदपि नाम त्रिकस्य ज़ातिपर-

निर्द्देशमादिशन्तोऽर्व्वाचीनसमीचोनकवयो बहूनि पद्यानि समाचरन्ति तथापि पञ्चोपरित्रिंशदवधिकान्येव त्रिकानि द्विचतुःषट्दशकलान्येव विरुदानि द्वादशोपरि चतुःषष्ठिपर्यन्त एव कला एव कलिकाः, तदेव देव चिन्तयामः । प्रबन्धपरार्द्धमन्तरा क इव तावकीनगुणबिन्दुमप्यान्दोलयतु ॥

**कलिकर्णकलिका**

[ १३७ ]

जहांगीर महावीर ध्रुवं सामाजिको गुणः ।
यतो युष्मत्करगता लक्षदानपराः शराः ॥

**शोभनश्लोकाः**

[ १३८ ]

ह्लादिनीह्लदपरिप्लवगृहिणीग्लपितारिर्भव ।

**वीरविरुदम्** ॥३०॥

[ १३९ ]

कान्त्या च प्रतिकर्मसञ्जनितया कीर्त्यावि सर्वाधिकः
कुर्व्वाणोऽर्ज्जुनवत् पतङ्गसुतवत् प्रत्यर्थिदानोत्सवान् ।
राज्ञां च प्रतिहारदण्डदलनं वैरिस्त्रियाश्चादधद्
भूप ब्रह्मवयोऽनुरूपमुभयं विस्तारयायुर्यशः ॥

[ १४० ]

तादृक्सप्तसहोदरैकवलभीमूर्द्धन्यरत्नाङ्कुर—
श्रीभाजं चरणं महीपतिगुरोर्न्नत्वा मया गुम्फिते ।
ग्रन्थेऽस्मिन्मुदमश्चतात्कुमुदिनी माताऽथ मातामहः
श्रीमानच्युतठक्कुरो जनयिता सन्मिश्रविश्वेश्वरः ॥

इति श्रीहरिताम्रकुलकर्णपूरमैथिलमयूरनवनीरदश्रीजहांगीरकुलवन्दिष्यमान(ण)श्रीहरिदेवमिश्रविरचिता विरुदावली सम्पूर्णा॥[1]

---

१. लिपिकर्त्रा पद्यद्वयमिदं ग्रन्थान्ते लिखितम्—
युगशशाङ्कमुनीन्दुसमे १७१२ शके तुरगसप्तकलम्बकचन्द्रके । १५१७
धवलपक्षकसंयुतभाद्रके विधुजवारयुतो नवमीतिथौ ॥१॥
त्रिदशलोकसदर्च्यगिरीन्द्रयोश्चरणयुग्मसरोरुहषट्पदः ।
समलिखन्मणिकण्ठसुतः स्वयं हरिपुरे विरुदावलिकां शुभाम् ॥२॥
॥ श्रीः ॥

